अथाभावरहस्यग्रन्थस्यप्रारम्भः॥

अ॰ १

ॐ। विघ्नेश्वरं विघ्नविनाशनार्थं वाग्देवतां वाक्परवैभवार्थम्॥ मार्तण्डमारोग्यकृते गिरीशं सर्वार्थसिद्ध्यै शिरसाऽभिव
न्दे।१। परमेश्वरगुणरसिकान्दशदशदिग्व्यापिशुभ्रतरयशसः। श्रीगुरुनानकमुख्यांस्तान्सततं प्रणमामि च भजामि।२॥
श्रेष्ठो गुरुत्वगणाभ्यां दोषघ्नदर्शनहरीन्तु नः। श्रीमद्गुलाबसिंहाख्यान्सद्गुरूनभिवादये।३। श्रीगुरुभिः कृपया ख्यान्तवेशास्त्रार्थ
दर्शिनः। नत्वाऽभावरहस्याख्यो ग्रन्थोऽयं क्लृप्यते मया।४। विद्वन्मनःचमत्कारिनिजार्थतत्त्वप्रमत्तभावविषयेस्खलनं यदि स्यात्।स
न्तः कृपार्द्रहृदयास्तदिदं च मत्त्वा स्वल्पावबोध इह कस्तदुपेक्षितेनैव।५। [illegible] प्रकाशाय मम प्रयत्नं कुर्वन्तु विज्ञास्तत्फलं हि यातः। मान्य
येऽनुत्तमाऽप्यजनास्तु नोऽन्ये साधारणां कृतिमयाञ्चयन्नाम्।६। अथ षड्भावपदार्थज्ञानस्य सुलभ.त्वात्तमुपेक्ष्य। अभावज्ञानस्य स
र्वशास्त्रेषूपयोगात्। अभावस्य बहुवादिसम्मतत्वात्। दुरूहत्वाद्विदुषां जिज्ञासोदयात्। अभावतत्त्वस्य तत्तत्सन्निकर्षतन्त्राहकप्रमाणे
षु बहुवादिवादर्शनाच्च स्वापरीत्या प्राचीननवीनोक्तयुक्तिसङ्ग्रहमात्रेण निर्मलेनोद्धवसिंहेन पथ्यामतिना नानामतनिरसनायासपरि
कराभावो निरूप्यते॥ तथाहि॰ नावन्निषेधप्रतीतिविषय[illegible]त्वमभावत्वम्। अस्ति हि भूतले घटो नास्ति घटः पटो नेत्यादि
प्रतीतिविषयताऽभावानामिति उत्पन्नानुपापिनस्तत्र [illegible] उक्तप्रतीतिविषयत्वस्य प्रतियोगिनि घटेऽपि सत्त्वादतिव्या
प्तेः नञ्छेतन्मते भावानामपि लक्ष्यत्वमेव। घटाधिकरणे घटाभावो नास्तीत्यादिप्रती ॥ ॥ ॥ ॥

तेः। तात्पर्य्यटीकायामाचार्य्यवाचस्पतिना· नखल्वभावाभावोनामकश्चिदन्योभावात्त्रापिभावाभावोऽन्योऽभावादित्युक्त-
त्वाच्चेतिवाच्यम् अभावत्वस्यभावाभावसाधारणतयाषट्पदार्थातिरिक्तत्वेनाभावविभागानुपपत्तेः विभजनीयव्य-
क्तिमात्रवृत्तिधर्मनिष्ठव्यापकतानिरूपितव्याप्यताश्रय परस्परासङ्कीर्णधर्मेणधर्मिकथनस्यैवविभागपदार्थत्वात्
अन्यथाऽभावोभावभिन्नोनिषेधप्रतीतिविषयत्वादित्यादौहेतौ भाववृत्तित्वेनव्यभिचारित्वेतत्रभेदसाधकत्वरूपलक्षण-
प्रयोजनंनसिध्येतनचकाश्यपमहर्षिकणादेन· उत्क्षेपणमपक्षेपणमाकुञ्चनम्प्रसारणंगमनमितिकर्माणि· इतिसूत्रे
उत्क्षेपणादिसाधारणगमनत्वेनविभजनात्तद्व्यापकधर्मेणविभागोपिनक्षतिरितिवाच्यम् ऋषेर्नियोगपर्यनुयो-
गानर्हत्वेनतद्विभागस्यसम्भवेप्यन्यत्रानभ्युपगमात् अत्रशङ्करमिश्रास्तु गमनत्वमपिकर्मत्वव्याप्यापञ्चमीजातिरेव· तेनभ्र-
मणरेचनादिष्वेवगमनप्रयोगोमुख्यः। उत्क्षेपणापक्षेपणादिषुयदिगमनप्रयोगस्तदाभाक्तः स्वाश्रयसंयोगविभागास-
मवायिकारणत्वमेव गौणमुख्यसाधारणोधर्मस्तत्प्रयोजकः। गमनत्वजातेस्तुनियतदिग्देशसंयोगविभागासमवायिकारण-
त्वमेवव्यञ्जकमतश्चभ्रमणरेचनादिषुसर्वत्रेतिगमनग्रहणेनैवतेषांग्रहणमितिनसूत्रेपिव्यापकधर्मेणविभागइत्यूचुः
नचैवमपिप्रतियोग्यमिश्रितत्वेतिप्रतीतिविषयत्वंनलक्षणमस्त्वितिवाच्यम् प्रतियोग्यनुयोगिविनिर्मोकेणाभावप्रतीत्य

अ ननुभवात् नचभावान्यत्वेसतिनिषेधप्रतीतिविषयत्वंतदितिपुक्तम् विशेष्यभागवैयर्थ्यापत्तेः। लक्षणाघटकभेदेऽव्याप्तेः। अभा
२ वलक्षणस्याभावघटिततत्वेनात्माश्रयापत्तेश्चेति १वादीन्द्रमानमनोहरकारास्तु समवायान्यत्वेसत्यसमवायित्वमभावलक्षणम्
अत्रसमवायेतिव्याप्तिवारणायसत्यन्तम् प्रतियोगितानुयोगितान्यतरसम्बन्धेनसमवायवतिद्रव्यादिपञ्चकेतिव्याप्तिवारणा
यविशेष्यदलमित्याहुस्तन्न रूपसमवायीघटइत्यत्ररूपसमवायस्यस्वात्मकस्वरूपसम्बन्धेनानुयोगितयाघटेप्रतियोगितयासमवा
येचसत्त्वातिसमवायेव्युक्तासमवायित्वाभावादेवानतिप्रसक्तयासत्यन्तवैयर्थ्यापत्तेः नचसमवायीत्यत्रसमवायस्यसमवायत्वेने।
वनिवेशः ननुस्वरूपत्वेनेतिनोक्तदोषइतिवाच्यम् अन्युतगौरवात् लक्षणाघटकाभावेऽव्याप्तेः। उक्तलक्षणस्याभावघटि
ततयात्माश्रयापत्तेश्च। २। यत्तुसंसर्गारोपजन्यप्रतीतिविषयत्वमभावत्वम् अत्रसंसर्गारोपः। संसर्गेण प्रतियोगिता।
वच्छेदकेन आरोपः प्रतियोगिनोभ्रमः तज्जन्यायाकपालेघटदिसंयोगादि संसर्गेणघटवत्त्वा‾‾त्तदातद्धत्तयोपलभ्ये
तनचोपलभ्यतेगतःकपालेघटाभाववदित्याकारप्रतीतिस्तद्विषयत्वमभावानामितिलक्षणसमन्वयः। नास्तिघ।
टोगेहइतिसतोघटस्यगेहसंसर्गप्रतिषेधः। इतिकणादसूत्रमप्युक्तार्थेप्रमाणम्॥ अत्रायमर्थः। सतः।
देशान्तरेवर्त्तमानस्य। तत्रैवसंसर्गान्तरेणवर्त्तमानस्य। तत्रैवापू ॥ १॥ रामरामरामरामरामरामरामरामरामरामरामराम

वैन्नस्कालेवर्त्तमानस्य वा घटस्य। गेहसंसर्गप्रतिषेधः। गेहसंसर्गस्य प्रतियोगिनः प्रतिषेधोऽभावः। नास्ति घटो गेह इ
ति प्रतीतिविषय इति॰ येतु गेहसंसर्गप्रतिषेध इति गेहावच्छिन्नभागस्य गेहे घटस्य यः संसर्गः संयोगादिस्तस्य प्रतिषेधः स च
त्र यदि कदाचिदपि न घटसंसर्गः तदा तदत्यन्ताभाव एव। भविष्यतो घटसंसर्गस्य प्रागभावः। भूतस्य तत्संसर्गस्य प्र
ध्वंसाभाव उक्तप्रतीतिविषयः। न तु तत्संसर्गेण घटाभाव इति यथाश्रुतार्थं वर्णयन्ति तन्न सम्यक् नास्ति घटो गे
ह इति स्वोक्तप्रतीत्यनुपपत्तेः। नास्ति घटसंसर्गो गेहे इति प्रतीत्यापत्तेश्च ननु नास्ति घटो गेह इत्यत्र घटपदं ल
क्षणया घटसंसर्गपरमेव। भवन्मते प्रतिषेधपदं प्रतियोगिप्रतिषेधपरमिवेति नोक्तप्रतीत्यनुपपत्तिरिति चेन्न उ
क्तरीत्या सर्वत्राभावप्रतीतीनां सम्बन्धाभावविषयत्वेनैवोपपत्त्या घटाद्यभावविलोपापत्तेः। ग्राह्याभावानवगाहि
तया नास्ति घटो गेहे इति प्रतीतिकालेऽप्यस्ति घटो गेहे इति प्रतीत्यापत्तेः। घटो घटसंसर्गो नेति वहुटो घटो नेति प्रती
त्यापत्तेश्चेत्यन्यत्र विस्तर इति करणाद्यनुयायिनामभावलक्षणं तदपि न सम्यक्। तथाहि अभावज्ञानमा उक्तसंस-
र्गादिघटितलक्षणज्ञानाधीनम् १ तज्ज्ञानञ्च तद्घटकसंसर्गत्वज्ञानाधीनम् २ संसर्गत्वज्ञानञ्च विशिष्टधीजनक
त्वरूपतल्लक्षणज्ञानाधीनम् ३ तज्ज्ञानञ्च जनकत्वज्ञानाधीनम् ४ तज्ज्ञानमप्यनन्यथासिद्ध्यादिज्ञानाधीन

अ॰ मित्येवं रीत्या चक्रकादिदोषापत्तेः अतीन्द्रियप्रतियोगिकातीन्द्रियाभावेष्वव्याप्तेः नन्वदधिकरणोपद्यत्र परमाणु
३ स्यान्न ह्युपलभ्येतेत्यारोपयितुमशक्यत्वाच्चेति ३ मुक्तावलीकारास्तु अभाववत्त्वं द्रव्यादिषट्कान्योन्याभाववत्त्वम् अ
त्र च द्रव्यत्वादीनां न प्रतियोगितावच्छेदकत्वम् न्यूनवृत्तित्वात् अननुगमाच्च किन्तु तद्गतषट्कत्वसङ्ख्यैव द्वि
प्रतियोगिताकभेदस्य द्वित्वमिवेत्यभावलक्षणमाहुः नन्वघटपटोभयभेदस्य प्रत्येकं घटपटयोरिव षट्त्वावच्छि
न्नभेदस्याभावत्वे द्रव्यं द्रव्यादिषट्कमित्यादिप्रतीत्या तस्य प्रत्येकं द्रव्यादावपि सत्त्वेन तेष्वतिव्याप्तेः न च पर्याप्तिस
म्बन्धेन षट्त्वावच्छिन्नभेदस्य द्रव्यादौ सत्त्वेऽप्यपेक्षाबुद्धिरूपषट्त्वस्य विषयतयावच्छेदकत्वान्न द्रव्यादिष्वति
प्रसङ्ग इति वाच्यम् व्यासज्यवृत्तिधर्माणां पर्याप्तिसम्बन्धेनैव प्रकारत्वनियमेनान्यसम्बन्धेन प्रकारत्वासम्भवा
त् अन्यथा द्वित्वस्य समवायेन प्रत्येकमपि सत्त्वेन एको द्वाविति प्रतीत्यापत्तेः एको न द्वाविति प्रतीत्यनुपपत्तेश्च
न च एको द्वाविति प्रतीतिविरहेऽपि एको द्वित्ववानिति प्रतीतेरिष्टतया समवायेनापि व्यासज्यवृत्तिधर्माणां प्रकारत्वमा
वश्यकमिति वाच्यम् द्वित्ववानिति प्रतीतौ मत्वर्थसमवायस्यैव प्रकारत्वात् द्रव्यादिषट्कं नेति प्रतीतौ पर्याप्तिस
म्बन्धेनैव षट्त्वस्य प्रकारत्वानुभवात् अथ पर्याप्त्याख्यविलक्षणसम्बन्धस्यैवाप्रसिद्धिः दुर्निरूपत्वात् अतिरि

क्तकल्पनेगौरवाच्चेतिचेन्नद्वित्वादिस्वरूपस्यैवद्वित्वादिपर्याप्तिरूपतयानिरुक्तदोषानवकाशात् तदुक्तंगदाधरभट्टा
चार्य्येण द्वित्वादेरेवलाघवेनद्वित्वादिसम्बन्धत्वौचित्यादिति उक्तंचदीधितिकृतापि पर्याप्तिश्चायमेकोघटइमौ द्वा
वित्यादिप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषइति प्राभाकरादिमतेतु द्वित्वादिसमवायएवद्वित्वपर्याप्तिः ननु
स्वरूपमतिरिक्तपदार्थोवा तन्मते ऽव्यासज्यवृत्तेरेकत्वादीनांसमवायस्याव्यासज्यवृत्तिः व्यासज्यवृत्तिद्वित्वादीनां
समवायोपिव्यासज्यवृत्तिः समवायस्यनानात्वाभ्युपगमादित्येवं द्रव्यादिष्वतिव्याप्तेर्ध्रौव्यात् प्रथमलक्षणोक्तदोषा
नुद्धाराच्चेदमपिलक्षणंनसम्भवतीत्यन्यत्रविस्तरः ४ यत्तु भावेभावभेदस्यासत्त्वादेवातिव्याप्तेर्वारणात् भावभि
न्नत्वमभावानांलक्षणमस्त्वितिकस्यचिन्मतं तदपिनविचारसहम् अत्राभावत्वस्यभावभेदरूपत्वे अभावोन
भावइतिवाक्याच्छाब्दबोधानुपपत्तेः घटोघट इत्यादावभेदसंसर्गकशाब्दबोधे उद्देश्यतावच्छेदकविधेयताव
च्छेदकयोरैक्यस्यैवभेदसंसर्गकशाब्दबोधेउद्देश्यतावच्छेदकविधेययोरैक्यस्यापिनिराकाङ्क्षताप्रयोजक
त्वात् अतएवगम्यतेग्रामइतिवत्कर्मगम्यतइत्यादयोनप्रयोगाः कर्मत्वावच्छिन्ने उद्देश्ये आख्यातार्थकर्मत्व
स्यविधेयतयान्वयेउद्देश्यतावच्छेदकविधेययोरैक्यादिति ५ अत्रनव्याः समवायैकार्थसमवायान्यतरसम्बन्धे

त्ता
यत्किञ्चित्सत्ताभावीयप्रतियोगितानविशेषणेनसत्तात्वेनानवच्छिन्नत्वंप्रतियोगित्वेदेयम् ५

अ· नसत्ताभाववत्त्वमभाववत्त्वम् अत्रोभयत्रसमवायस्योभयत्वेननिवेशेजातिगगनादावतिव्याप्तिरतोऽन्यतरत्वेननिवेशः स
४ त्ताभावः सत्तात्वसमनियतप्रतियोगिताकोग्राह्यः तेनसत्तावतिसत्तागगनोभयाभावादिमादायनातिव्याप्तिः नचस
त्तात्वसमनियतप्रतियोगिताकस्यघटत्वेनसत्ताभावस्यकेवलान्वयितयाद्रव्यादावपिसत्त्वान्नातिव्याप्तिरिति
वाच्यम् समानाधिकरणयोरेवावच्छेद्यावच्छेदकभावस्वीकारेणसत्तानिष्ठप्रतियोगित्वासमानाधिकरणघट
त्वस्योक्ताभावप्रतियोगितानवच्छेदकत्वात् नचलक्षणघटकसत्ताभावेऽव्याप्तिस्तत्रस्वस्मिन्स्ववृत्तित्वासम्भवे
नोक्तसत्ताभाववत्त्वलक्षणाविरहादितिवाच्यम् सत्ताभावेपिसत्ताभावान्तरसम्भवात् नचैवमनवस्थापत्तिरि
तिवाच्यम् तत्रतत्रसत्ताभावस्यैकरूपस्यैवसम्भवादित्याहुः तन्न जात्यखण्डोपाधीतरस्यसत्ताभावरूपाभावत्व
स्यस्वरूपतोभानासम्भवेनाभावत्वेनैवतस्यप्रकारतावाच्या· तच्चसत्ताभावरूपंतदपिपुनः सत्ताभावरूपाभा
वत्वेनप्रकार इत्येवं तत्रतत्राप्यङ्गीकरणीयतयाविषयतानवस्थापत्त्याऽभावप्रतीत्यनुपपत्तेः नचसत्ताभावरू
पाभावत्वस्यस्वरूपतएवप्रकारत्वोपगमान्नदोषइतिवाच्यम् जात्यखण्डोपाधीतरस्यापिस्वरूपतोभानाङ्गीका
रेघटादीनामपितथात्वापत्तेः सत्ताभावरूपाभावत्वस्यस्वरूपतः प्रकारत्वोपगमेपिसत्तोपस्थितिशून्यकालेप्र

ढेनासीत्यादिप्रतीत्यनुपपत्तेश्च अभावज्ञाने प्रतियोगिज्ञानस्य हेतुतया सत्ताज्ञानं विना सत्ताभावरूपाभावत्वभा
नासम्भवात् न चाभावज्ञाने प्रतियोगिधियो न हेतुत्वम् तेजोज्ञानं विनापीदन्तमः इति प्रतीतिदर्शनादिति वाच्य
मयतः प्रत्यक्षविषय‾त्वमस्त्व न तेजोभावत्वरूपमपि तु तेजोभावनिष्ठतद्व्यक्तित्वमेव नातस्तेजोज्ञानं विना
तादृशप्रतीत्यनुपपत्तिः नन्वेवमपि प्रकृते लक्षणावाक्यजन्याभावत्वप्रकारकशाब्दबोधादौ पदजन्यार्थो
पस्थित्यादीनां हेतुत्वेऽपि प्रतियोगिज्ञानस्य न तत्त्वेन हेतुत्वं पदाजन्यप्रतियोगिज्ञानसत्त्वेऽपि प्रतियोगिनोऽभानात्
अपि त्वभावत्वप्रकारकप्रत्यक्ष एव प्रतियोगिज्ञानस्य तत्त्वेन हेतुत्वमिति नोक्तदोष इति वाच्यम् सर्वत्र खण्डवाक्या
र्थबोधानन्तरमेव महावाक्यार्थबोध इत्यङ्गीकर्तृनवीनमते सर्वत्र विशिष्टवैशिष्ट्यावगाहिबोधे विशेषणतावच्छे
दकप्रकारकनिर्णयस्य हेतुत्वेन सत्तात्वप्रकारकसत्ताविशेष्यकनिर्णयं विना सत्तात्वावच्छिन्नप्रतियोगिताक
त्वसम्बन्धेन सत्ताविशेषिताभावरूपाभावत्वविषयकशाब्दस्याप्यसम्भवात् न च खलेकपोतन्यायेन केवलवि
शेष्ये विशेषणमिति रीत्या शाब्दाङ्गीकारे न तादृशविशेषणधियो हेतुत्वमिति वाच्यम् प्रतियोगिविशेषिताभा
वबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमात् तदुक्तं गदाधरभट्टाचार्य्येण प्रतियोगिविशेषिताभावबुद्धेश्च सा

श्र० तियोगिप्रकारीभूतधर्मविशिष्टवैशिष्ट्यावगाहितया नीलत्वादिना नीलादिविशेषिताभावे नीलत्वाद्यवच्छिन्नप्रति
५ योगिताकत्वरूपवैशिष्ट्यस्यैवभानात् अन्यथाविशिष्टवैशिष्ट्यबोधत्वानुपपत्तेः प्रतियोगिविशेषिताभाव —
ज्ञानं तु विशिष्टवैशिष्ट्यबोधमर्यादान्नातिशेते इति दर्शनात्· केवलं विशेष्ये विशेषणमिति रीत्या न कश्चिदभ्युपै
तीति प्राचीनमतेपि सन्नाज्ञानं विना सन्नाभावरूपाभावत्वशाब्दो सिद्ध एव· एतन्मते घटाभाववद्भूतलमस्तीत्या
दिमहावाक्यार्थबोधस्यातिखण्डवाक्यार्थबोधस्याहेतुत्वेपि तावन्मात्रपदार्थस्मरणस्य हेतुताभ्युपगमात् तदुक्तंमु
क्तावलीप्रकाशे· आशुतरविनाशिनीनां क्रमिकाणां पदजन्यपदार्थोपस्थितीनां मेलनासम्भवात्तत्र शाब्दबोधे
पदजन्यपदार्थोपस्थितिः समूहालम्बनात्मकैव कारणम् एवञ्च सर्वत्र युगपदेव सकलपदार्थानां विशेष्ये वि
शेषणमिति न्यायेनैव शाब्दबोधो न तु विशिष्टस्य वैशिष्ट्यमिति रीत्यापि तज्ज्ञानकविशेषणतावच्छेदकप्रकारक
निर्णयस्य पूर्वं — सर्वत्रासम्भवादिति तथा च सन्नाज्ञानं विनाऽभावबोधकतत्तत्पदात्सन्नाभावरूपाभावत्वप्रकार
कज्ञानमत्र दुर्लभम् यद्यप्यत्र शाब्दप्रक्रियायां प्राचीननवीनमतभेदेन बहुतरविचारोऽस्ति तथापि विस्तरभियेह
नोच्यते विद्वद्भिरन्यत्रान्वेषणीयमिति ८ यत्तु सन्नाप्रभावो निरूप्यत इति वचनात्· प्रतियोग्यादिसापेक्ष्यप्रतीतिविषय

त्वमभावत्वमित्याहुः तन्न ह्रस्वदैर्घ्यसादृश्यपरत्वापरत्वनानात्वपृथक्त्वाधारत्वादिषु वहुषु भावेष्वतिव्याप्तेरतीन्द्रियाभावेष्वव्याप्तेश्च ७ परे तु उक्तव
चनात्प्रतियोग्यनुयोगिविशिष्टस्यैवाभावप्रत्ययोदयात् · निर्विकल्पकबुद्ध्यविषयत्वमभावत्वमित्याहुस्तन्न ब्रा
ह्मणत्वादिजातिष्वतीन्द्रियभावेषु चातिव्याप्तेः नहीन्द्रियसन्निकर्षेण शिखासूत्रदर्शने नैव ब्राह्मणत्वादिज्ञानं सम्भवति सूत्रया।
दीनामपि तत्सम्भवात् अपि तु वेदपाठब्रह्मचर्य्यमातृपितृसन्दर्शनानन्तरं वाक्यादिव्यञ्जकविशेषप्रतीत्यनन्तरमेवते
षां विशिष्टप्रतीतिविषयत्वसम्भवात् उक्तं च वार्त्तिककृता ब्राह्मणत्वादिज्ञानं जन्मतः क्वचिदाचारतश्चापि स।
म्यग्राजानुपालितात् तैलाहूतं विलीनं च गन्धेन च रसेन च ज्ञायत इत्यादिना अस्यायमर्थः यथा विलीनं घृतं
गन्धेन रसेन च तैलाद्भेदेन ज्ञायते तथा ब्राह्मणत्वादिजातिरपि जन्मतः अविप्लुतब्रह्मचर्यो ब्राह्मणस्स्यादित्यादि
वचनात् आचारदर्शनादिना क्षत्रियत्वादितो भेदेन ज्ञायत इति संक्षेपः ८ वादिविनोदकारास्तु समवेतत्वस
मवायित्वसमवायत्वानधिकरणत्वमभावत्वम् · समवायादिसम्बन्धाधिकरणतानुयोगिन्येवास्ति न तु प्रतियोगि।
नि घटे रूपमिति वद्रूपे घट इत्यदर्शनात् सामान्यादावतिव्याप्तिवारणाय समवेतत्वेति · नित्यद्रव्येषु तद्वारणाय समवा।
यित्वेति · समवायेन तद्वारणाय समवायत्वेति असम्भववारणाय नञिति न चानधिकरणत्वमित्यत्राभावनिवेशात्ते

त्तेरभ्योभिद्यते॰ अभाववदितिव्यवहारविषयोवा॰ अखण्डोपाधिमत्त्वात् उक्तानुयोगितावत्त्वाद्यन्यैव तन्नैवं य
थाघटादिरित्येवंव्यावृत्तिव्यवहारयोरनुमितिरेवप्रयोजनमित्येवहि अतएवलक्ष्यतावच्छेदकसमनियतत्वंलक्ष
लक्षणलक्षण। शून्यानान्धर्माणामभावलक्षणान्वन्नसम्भवति अव्याप्यधर्माणांप्रागभाववत्त्वादीनांभागासिद्धेः ति
व्याप्तप्रमेयत्वादीनांव्यभिचारित्वसम्भवद्दूषितभावत्वादीनांस्वरूपासिद्धेः त्तभोवादेवोक्तप्रयोजनासाधकत्वात्
अथात्रपक्षतावच्छेदकाभाववत्त्वस्याखण्डोपाध्यादिरूपत्वेतस्यैवहेतुत्वेचपक्षतावच्छेदकहेत्वोरैक्यप्रसङ्गः
नचपक्षतावच्छेदकहेत्वोरैक्येकोदोषइतिवाच्यम् व्याप्तिग्रहदशायामेवपक्षतावच्छेदकीभूतहेतौसाध्यसामा
नाधिकरण्यसिद्धेःसिद्धसाधनस्यैवदोषत्वात् नचहेतुः साध्यसमानाधिकरणइतिव्याप्तिग्रहस्यपक्षःसाध्यवानित्यनु
मितितोभिन्नाकारत्वात्समानाकारसिद्धेरेवानुमितिप्रतिबन्धकत्वान्नोक्तदोषइतिवाच्यम् उद्देश्यतावच्छेदकहेत्वो
रैक्येनयथाचायमित्युपनयवाक्याच्छाब्दबोधानुपपत्तेरेवदोषत्वात् नचनवीनमतेविधेयांशेऽधिकावगाहिनःशा
ब्दबोधस्योपगमेनपक्षतावच्छेदकहेत्वोरैक्येपिसाध्यव्याप्यहेतुमान्पक्षइत्याकारकस्योपनयवाक्यजन्यशाब्दबोध
स्यनानुपपत्तिरितिवाच्यम् प्राचीनैरुदाहरणवाक्यादेवव्याप्तिलाभादुपनयेनापितन्मतेनियादन्येपौनरुक्त्यमितिपक्षे

अ· हेतुमत्तामात्रमेवोपनयेन बोधनीयम् तथा चायमित्युपनयवाक्यस्य हेतुमान्पक्ष इत्येवार्थ इत्यङ्गीकारादेतन्मतानु
७ सारेणैव पक्षतावच्छेदकहेत्वोरैक्यप्रसङ्ग इति दूषणाभिधानादिति चेन्न अन्वयव्याप्तिग्रह एवोक्तदोषाणाम्प्रस
क्तिसम्भवात् प्रकृते तु लक्ष्यमात्रस्य पक्षतयान्वयव्याप्तिग्राहकदृष्टान्तासम्भवेन व्यतिरेकव्याप्तिमादायैव स
र्वलक्षणानां लक्ष्येतरभेदादिसाधकत्वेन सिद्धसाधनाप्रसक्तेः नन्वाचार्य्यमते व्यतिरेकव्याप्त्यभावेनान्वयव्या
प्तेरेव सत्त्वेनानुमितिहेतुतया कथमयं दोषः न च व्यतिरेकव्याप्त्यस्वीकारे त्रिधानुमानविभागानुपपत्तिरिति वाच्य
म् अन्वयसहचारमात्रेणागृहीतान्वयव्याप्तिकत्वं केवलान्वयित्वं व्यतिरेकसहचारमात्रेणागृहीतान्वयव्याप्तिक
त्वं केवलव्यतिरेकित्वमुभयसहचारेणागृहीतान्वयव्याप्तिकत्वमन्वयव्यतिरेकित्वमित्याचार्य्यमतेन विभाग
सम्भवादिति चेत् एवमप्युभयव्याप्तिज्ञानस्यानुमितिकारणतावादिमणिकारादिमते व्यतिरेकव्याप्तिमादाये
तरभेदानुमितिसम्भवात् नवीनमते साध्यव्याप्यहेतुमान्पक्ष इति बोधस्यैवोपनयवाक्यजन्यत्वोपगमेन विधेयां
शेऽधिकावगाहितयानन्वयसम्भवात् परार्थानुमितावेव न्यायप्रयोगस्यापेक्षणीयतया स्वार्थानुमितिमादायैव सर्वम
तेनापि लक्षणप्रयोजनसम्भवाच्च न लक्षणलक्ष्यतावच्छेदकयोरैक्येऽपि किञ्चिद्दोष इत्यन्यत्र विस्तरः स चाय

भूतलसंयोगेन घटाभाववत् ३ संयोगादिसम्बन्धेन घटवत्र घटः स्यात्तर्हि तेनैवोपलभ्येतेत्याद्याकारस्य ४

मभावो द्विविधः संसर्गाभावान्योन्याभावभेदात् ननु किमिदं संसर्गाभावत्वमन्योन्याभावत्वं च अत्र केचित् भेदसंसर्गारो
पजन्यप्रतीतिविषयाभावत्वं संसर्गाभावत्वम् अभेदसंसर्गारोपजन्यप्रतीतिविषयाभावत्वमन्योन्याभावत्वम् तद्धर्मि
विशेष्यकतत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नप्रतियोगिताकाभावप्रत्यक्षे तद्धर्मिकतत्संसर्गकतद्रूपावच्छिन्नप्र
कारकज्ञानं स्वहेतुत्वाल्लक्षणसमन्वयः नन्वधिकरणज्ञानप्रतियोगिज्ञानयोरभावबुद्धिहेतुतया ततएवोपपन्नाव
पदर्शितातिरिक्तकार्य्यकारणभावे मानाभावः न च प्रतियोग्यधिकरणयोः स्वतन्त्रज्ञानसत्त्वेऽधिकरणे प्रतियोगि
मत्ताज्ञानाभावदशायामभावप्रत्यक्षवारणायोक्तकार्य्यकारणभावस्यावश्यक इति वाच्यम् तदानीमभावप्रत्यक्षे
बाधकाभावात् अधिकरणानुपरक्तस्य प्रतियोग्यनुपरक्तस्य चाभावस्य लौकिकबुद्धेरनुभवविरुद्धतयाधिकरणप्र
तियोगिज्ञानशून्यतादशायामेवाभावलौकिकप्रत्यक्षानङ्गीकारादिति चेन्न प्रतियोग्यारोपस्याहेतुत्वेऽनेकाधिकरण
सन्निकर्षदशायां स्वतन्त्रतज्ज्ञानसत्त्वेऽपि कस्मिंश्चिदेवाधिकरणे उपस्थितानां प्रतियोगिनां कस्यचिदभावः प्रतीयते न तु
सर्वत्र सर्वेषामित्यत्र नियामकाभावः। एवंभूतलाधिकरणे कदाचित् घटादेरत्यन्ताभावः। कदाचिदन्योन्याभावः। अ
त्यन्ताभा—वोऽपि कदाचित्संयोगावच्छिन्नप्रतियोगिताकः कदाचित्समवायाद्यवच्छिन्नप्रतियोगिताकः प्रतीयते इत्या

ननु तयोः स्वातन्त्र्येण ज्ञानसत्त्वेऽपि ४

बाधज्ञानकालीनेच्छाजन्यंज्ञानमाहार्य्यम् अनुमित्यादिप

अ॰ त्यत्रापिनियामकाभावः।अनियमेचसर्व्वैरेवाभावः सर्व्वत्र प्रतीयेतन्नित्यत्तुविरोधः।प्रतियोग्यारोपस्यहेतुत्वेचयत्राधि
६ करणेयस्ययेनसम्बन्धेनयदारोपः तत्रतस्यतत्सम्बन्धावच्छिन्नाभावप्रत्यक्षंतदेतिनियमउपपद्यते अथप्रतियोग्या
रोपस्यसमानधर्म्मिकस्याभावबुद्धौविपरीतज्ञानत्वेनप्रतिबन्धकतयानहेतुत्वसम्भवः नचाहार्य्यएवप्रतियोग्यारोपो
हेतुः सचनप्रतिबन्धकइतिवाच्यम् आहार्य्यज्ञानस्यपूर्व्वंबाधबुद्धिमन्तरेणासम्भवात् प्रतियोग्यारोपस्याहार्य्यतानिर्व्वा
हायतत्पूर्व्वमभावबुद्ध्यनुरोपगमेनत्रापिप्रतियोग्यारोपस्यहेतुतयानवस्थाप्रसङ्गात् नचारोपात्पूर्व्वंस्मरणेतत्रूपाभावबुद्धि
रेवस्वीकार्य्यातत्रचनारोपान्तरापेक्षेतिनानवस्थेतिवाच्यम् लिङ्गपरामर्शशब्दज्ञानादिघटितपरोक्षधीसामग्र्याअनि
यतत्वादितिचेन्न अभावलौकिकप्रत्यक्षआहार्य्यप्रतियोग्यारोपस्यहेतुत्वेप्यन्यत्रानपेक्षणादनवस्थानुपपत्तेः तथाहि
घटाभाववद्भूतलमित्याद्यभावलौकिकप्रत्यक्षेयद्यत्रतत्स्यादित्याहार्य्यारोपस्यहेतुत्वेप्यत्राहार्य्यतानिर्व्वाहकेतत्पूर्व्वमुपनी
तभानात्मकेघटाभाववद्भूतलमित्यादिबाधज्ञानेपुनरत्रात्रघटःस्यादित्यादितर्कानपेक्षणात् यथाचात्रापाद्यापादकव्या
प्तिमूलकस्यैवतर्कस्योपयोगस्तथाग्रेवक्ष्यतइत्याहुस्तदसत् अतीन्द्रियसंसर्गान्योन्याभावयोरुक्तलक्षणाव्याप्तिः नचतादृ राम
शप्रतीतिविषयत्वस्याभावविभाजकोपाधिमत्त्वविवक्षणान्नोक्ताव्याप्तिरितिवाच्यम् तथाप्यभावाधिकरणकाभावस्या ६

नतिरिक्ततयात्यन्ताभाववद्वृत्त्यन्योन्याभावस्यात्यन्ताभावरूपतया ऽन्योन्याभाववद्वृत्त्यत्यन्ताभावस्य चान्योन्याभावरूपतया।
संसर्गाभावलक्षणस्यान्योन्याभावे ऽन्योन्याभावलक्षणस्यात्यन्ताभावे ऽतिव्याप्तेर्दुर्वारत्वात् अन्ये तु भेदसंसर्गावच्छि
न्नप्रतियोगिताकाभावत्वं संसर्गाभावत्वम भेदसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वमित्याहुस्तद
प्यसत् ध्वंसप्रागभावयोरन्योन्याभावस्य च प्रतियोगितावच्छेदकसम्बन्धे मानाभावेनाद्यलक्षणे ध्वंसप्रागभावयोरव्या
प्तेरन्यलक्षणे चासम्भवात् यत्तु अत्यन्ताभावप्रतियोगितावच्छेदकसम्बन्धे मानाभावादाद्यलक्षणेऽप्यसम्भवः नच
तेन सम्बन्धेन तत्प्रकारकबुद्धौ तत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभाववत्तानिर्णयस्य प्रतिबन्धकतयात्यन्ता।
भावप्रतियोगितावच्छेदकसम्बन्धसिद्धिरिति वाच्यम् विषयितया प्रमेयं नास्तीति प्रतीतौ यया विषयितया घटत्वनियामक
त्वेन तत्सम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगितायाँ प्रसिद्धा प्रतियोगितायां विषयित्वावच्छिन्नत्वादेर्भ्रमः तथा तेन सम्ब
न्धेन तत्प्रकारकबुद्धौ तत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभाववत्तानिर्णयत्वेन प्रतिबन्धकतायां तत्सम्बन्धावच्छिन्नत्व
निष्ठसांसर्गिकविषयतानिरूपितप्रति

ज्वालाप्रत्यभिज्ञायाः त्यक्तुंशक्यत्वेपि तद्धर्मिप्रत्यायाः सएवायंप्रागभावः सएवायंप्रध्वंसइत्याबाधितप्रत्यभिज्ञाया
अपलपितुमशक्यत्वाच्च· नित्यत्वेसतिसंसर्गाभाववत्त्वंभेदात्यन्तत्वेसतिनित्याभाववत्त्वं प्रतियोगिनिष्ठाभाववत्त्वंवाऽत्यन्ताभाव
त्वम् सचकपालेसमवायेनपटोनास्तीत्यादि प्रतीतिसिद्धः स्वप्रतियोग्यनधिकरणएववर्त्तते अथात्यन्ताभावस्यनि
त्यत्वेयत्रपूर्वोत्तरकालयोर्मण्यादिशून्यदेशेमध्येमण्यादिरानीतस्तत्रमण्याद्यानयनोत्तरमपिदाहादिकार्य्यापत्तिः। एवंरूपध्वंसरूप
एवंतत्रमण्याद्यानयनकालेमणिर्नास्तीत्यादिप्रतीत्यापत्तिश्च तत्रमण्याद्यत्यन्ताभावस्यनित्यतयातदानी—मपिस
त्त्वादितिचेत्· अत्रप्राञ्चः उक्तस्थलेनमण्याद्यत्यन्ताभाव उक्तदोषात् अपितुदाहादिकार्य्यकारि चित्वात्वप्रयोजकः प्र
तियोगिसमानाधिकरणउत्पत्तिविनाशशालीचतुर्थः सामयिकाभावव्यपदेश्यः स्वीक्रियते· सामयिकत्वंच· समयवि
शेषेउत्पत्तिविनाशशालित्वम् एवंचोक्तस्थलेमण्याद्यानयनात्पूर्वंपरतश्चसतोपितस्यमण्याद्यानयनोत्तरंनाशेनन
दाहाद्यापत्तिर्नवाप्रतीत्यापत्तिश्चेत्याहुः॥ लीलावतीकारानुयायिनस्तु उक्तसामयिकेसंसर्गाभावान्तरेमानाभावः उक्ता
पत्तेः प्रकारान्तरेणैववारणात् तथाहिमण्यादिसंयोगत्वेनैवदाहादिप्रतिबन्धकतयातदवच्छिन्नाभावस्तद्धेतुः स
चयत्राधिकरणेकदापिनमणिसंयोगस्तत्रात्यन्ताभावएव हेतुः अन्यत्रध्वंसप्रागभावावेवतथाविधौहेतू। तयोरपिसामा
व

योगिताकत्वस्यासम्भवाच्च · मणिकारानुयायिनस्तु मण्यादिशून्ये भूतलादौ मण्याद्यानयनोत्तरमपि मण्याद्यत्यन्ताभावोऽ
स्त्येव · अन्यथा तस्य त्रैकालिकत्वानुपपत्त्याऽत्यन्ताभावत्वस्यैवानुपपत्तेः परं तु तत्तत्कालविशेषावच्छिन्नतत्तद्भूतलादि
स्वरूपस्य दाहादिकारणतावच्छेदकसम्बन्धत्वं मणिर्नास्तीत्यादिप्रतीतिनियामकसम्बन्धत्वं चोपेयत इति नोक्तदोषा
पत्तिः सामयिकत्वं च · समयविशेषसम्बद्धत्वमित्यत्यन्ताभाव एव सामयिकाभाव इति व्यपदिश्यत इति वदन्ति ॥
दीधितिकृतस्तु संसर्गाकल्पनातो लाघवाद्दाहादिकारणतावच्छेदकमभावस्य वैशिष्ट्यं संसर्गान्तरमेवोपेयत इति
नोक्तापत्तिः न च तस्य नित्यत्वे उक्तदोषानिवृत्तिरनित्यत्वे तु तदुत्पत्तिविनाशकल्पने गौरवमिति वाच्यम् फलमुखगौर
वस्यादोषत्वात् · अन्यथा रूपवान्घट इत्यादावपि स्वरूपेणैव निर्वाहेऽतिरिक्तसमवायकल्पनं न स्यादिति प्राहुः यत्तु प्रतियो
गिदेशान्यदेशत्वमेवाभावाधिकरणयोः सम्बन्ध उपेयते · तेनैव सम्बन्धेनाभावः प्रतीयते कारणं चेति नोक्तदोष इत्याहुः
तन्न अन्योन्याभावस्य व्याप्यवृत्तित्वे मण्याद्यानयनात्प्राग्दाहाद्यनुरोधेन तदधिकरणे प्रतियोगिदेशान्यदेशत्वस
त्त्वेन मण्याद्यानयनेऽपि दाहाद्यापत्तेः । वृक्षादावव्याप्यवृत्तिसंयोगाद्यत्यन्ताभावप्रतीत्यनापत्तेश्च · तस्याव्याप्यवृ
त्तित्वे त्वन्योन्याभावस्यापि नित्यनिष्क्रियत्वेन प्रतिबन्धकसमवधानात्पूर्वं सततस्य तत्समवधानेऽप्यनपायेन दाहादि

अ॰ कार्य्याभावप्रतीत्योर्द्वैरस्त्वाच्च तथाच सामयिकाभावानङ्गीकारात्त्रिविधसंसर्गाभावविभागानुपपत्तिरिति अत्र
११ पटाद्यभावाभावोपि पटादिस्वरूप एव नत्वतिरिक्तः गौरवादिति वाचस्पतिमिश्राः दीधितिकारास्तु अभावाभावोऽतिरि
क्त एव· नतु भावरूपः तथाहि पटादीनां ध्वंसप्रागभावयोः प्रागभावध्वंसेन पटादिरूपौ· तयोरनाद्यनन्तत्वघटितलक्ष
णानुपपत्तेः ननु नहि लक्षणानुरोधेन लक्ष्यं कल्प्यमपितु लक्ष्यानुरोधेन लक्षणान्तरं कल्पनीयमिति चेत्· एवमपि
ध्वंसप्रागभावयोरनधिकरणदेशप्रतियोगिमत्त्वनियमेन पटादिध्वंसकाले तत्प्रागभावस्य पटादिप्रागभावकाले तद्ध्वंस
स्य चोन्मज्जनापत्तेः नच पटादिप्रागभावस्य पटादितद्ध्वंसाभ्यां पटादिध्वंसस्य पटादितत्प्रागभावाभ्यां च विरोधकल्पनान्न दो
ष इति वाच्यम् एतत्कल्पनापेक्षया अतिरिक्तयोर्ध्वंसप्रागभावयोरनन्तानादित्वकल्पनस्यैव युक्तत्वात्· ध्वंसप्रागभावप्राग
भावध्वंसयोः प्रतियोगिरूपत्वे पटादिसत्त्वकाले तन्त्वादौ न ध्वंसप्रागभावौ न स्त इत्यबाधितानुभवस्याप्यनुपपत्तेश्च पटादि
त्वात्यन्ताभावविषयकत्वेनैवोपपत्तेः उक्तप्रत्यययोर्न तादृशध्वंसप्रागभावातिरिक्तत्वसाधकतेति विभाव्यते तदा पटादिध्वं
सो भविष्यति पटादिप्रागभावो नष्ट इत्यादिप्रत्ययस्तादृशध्वंसप्रागभावयोरतिरिक्तत्वसाधक इति॥ प्रागभावसत्त्व एव राम
तयोरतिरिक्तानतिरिक्तत्वचिन्ता· सएव नास्ति· साधकाभावादिति त्वन्ये॥ एवं द्वितीयात्यन्ताभावस्याभावत्वे पटादिमति ११

अभावविरहत्वं घटत्वं प्रतियोगिविरहविशिष्टत्वं
अस्य च तत्र वर्त्तमानत्वेऽपि नातिरिक्तः ॥२॥

तन्त्वादौ पटाद्यभावो नास्तीत्यबाधिताभावत्वप्रत्ययानुपपत्तेः। भावेऽभावत्वविरहात्। अभावत्वस्य भावाभावसाधारणत्वे पदार्थविभाजकोपाधितानुपपत्तेरुक्तत्वात्। न च तस्याप्यत्यन्ताभावतया नित्यत्वेन पटकाल इव पटनाशकालेऽपि हि तन्तौ पटात्यन्ताभावो नास्तीत्यादिप्रतीत्यापत्तिरिति वाच्यम्। पटादिप्रतियोगिकालस्य प्रतियोगिविशिष्टाधिकरणस्यैव वा तादृशाभावप्रत्ययादिनियामकसम्बन्धत्वोपगमात्। न चैवं तृतीयतुरीयाभावादीनामतिरिक्तत्वेऽनवस्था स्यादिति वाच्यम्। प्रथमपटाद्यभावस्यैव स्वाभावाभावरूपत्वेनोक्तदोषानवकाशात्। एवं भेदसामान्यभेदस्तु द्वितीयोऽपि नातिरिक्तः। अपि तु भावत्वं संसर्गाभावत्वमित्युभयस्वरूपमेव। पटभेदो नेत्यादिविशिष्यद्वितीयभेदस्तु स्वभिन्नाभावत्वं भावत्वं चेत्युभयस्वरूपमेव। उक्ताभावान्यतरत्वं वा। अतिरिक्तत्वेऽनवस्थापातात्। अत्र भावत्वं द्रव्यादिषट्कान्यतमत्वमभावभिन्नत्वं वा न तु सत्तावत्त्वम्। भेदस्य भावत्वापत्तेरिति प्राहुः। अत्र भेदस्य भेदोऽप्यतिरिक्त एव न चैवमनवस्था। तस्याः प्रामाणिकत्वेनादोषत्वात्। अन्यथाऽन्योन्याभावमात्रस्यैवानतिरिक्तत्वं प्रसज्येत। सर्वत्र तदधिकरणमात्रवृत्तिधर्म एव तत्स्वरूपत्वकल्पनसम्भवादित्यपि केचित्। अत्र पृथिव्यां गन्धसत्त्वेऽपि पृथिवीजलयोर्न गन्ध इत्यादिप्रतीतिसिद्धद्वित्वाद्यवच्छिन्नानुयोगिताकस्य घटसत्त्वेऽपि घटपटोभयं नास्तीत्यादिद्वित्वाद्यवच्छिन्नप्रतियोगिताकस्य पूर्वक्षणविशिष्टघटो नास्तीत्यादिक्षणाद्यवच्छिन्नप्रतियो-

अ· गिताकस्य च बहुवादिसम्मतगन्धाभावादेरत्यन्ताभावेनभेदाच्च संसर्गाभावाधिक्यमिति ध्येयम्· अत्र सोन्दडोपाध्यायास्तु पटा
१२ दिद्रव्याधिकरणे द्रव्यसामान्यं नास्तीति प्रतीत्यसत्त्वेपि घटत्वेन द्रव्यं नास्तीत्यबाधितप्रतीतिविषयस्य विशेषरूपेण सा
मान्याभावस्य· एवं तत्रैव द्रव्यत्वेन घटो नास्तीति प्रतीतिविषयस्य सामान्यरूपेण विशेषाभावस्य च सत्त्वा — त्कथं वि
भागोपपत्तिः। प्रतीतीनामसाक्षिकत्वे त्वभावमात्रासिद्धिप्रसङ्गः· ननु घटत्वेन द्रव्यं नास्तीति प्रतीतिर्घटमात्रप्रतियोगि
काभावमवगाहते न तु द्रव्यसामान्यप्रतियोगिकम्· घटवति घटो नास्तीति प्रतीत्यसत्त्ववद्घटत्वेन द्रव्यसामान्यन्ना।
स्तीति प्रतीतेरप्यनुत्पत्त्या घटमात्रवृत्तिप्रतियोगिताकाभावावगाहित्वस्यावश्यकत्वात्· तादृशातिरिक्ताभावाङ्गीका
रे तु द्रव्यमात्रे तदीयप्रतियोगिताकल्पने गौरवाच्च· एवं पटाधिकरणे द्रव्यत्वेन घटो नास्तीति प्रतीतिरपि घटवत्यनुत्पत्त्या घ
टमात्रवृत्तिघटत्वावच्छिन्नप्रतियोगिताकसामान्याभावमवगाहते न तु द्रव्यत्वावच्छिन्नघटनिष्ठप्रतियोगिताकम्· द्रव्यत्वञ्च
स्यातिप्रसक्तत्वेन तादृशप्रतियोगितानवच्छेदकत्वात्· अत्रावच्छेदकत्वार्थकतृतीयानुपपत्तिरिति तु न शङ्क्यम्· तृतीयाया
वैशिष्ट्यमात्रार्थकत्वात्· उक्तं च व्यधिकरणे द्रव्यत्वेन वह्निर्नास्तीति प्रतीतौ वह्नित्वस्यैव प्रतियोगितावच्छेदकत्वं भासते द्रव्यत्वस्य तु वैशिष्ट्यमात्रं विषय इति तथा चा राम
भावाधिक्यप्रसङ्गो नेति चेन्न एवमपि घटत्वेन पटो नास्तीति प्रती(ति)विषयव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य संयोगेन ह्रदे वह्निर्नास्तीतिप्रतीति विष १२

विशिष्टपक्षेउभयवत्तिसामानाधिकरण्यसम्बन्धेनजलविशिष्टघटस्यघटविशिष्टजलस्यचासत्त्वंबोधयितुमशक्यत्वात्॥जलघटोभयत्वावच्छिन्नेपृथिवीत्ववैशिष्ट्यसत्त्वप्रसि
द्धेश्चेति

यद्व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकस्य· जलघटोभयाधिकरणेपिपृथिवीत्वेनजलघटोभयंनास्तीतिप्रतीतिविषयत्व
सिद्धाकारस्यचातिरिक्ताभावस्यसत्त्वात् नचोक्ताभावस्यतु सिद्धाकारस्यकथमतिरिक्तत्वमि तिवाच्यम् उक्ताभावेष्वन
न्तर्भावात् तथाहितादृशाभावोनसामान्याभावरूपः। पृथिवीत्वस्यजलनिष्ठप्रतियोगित्वासमानाधिकरणत्वात्· नापिव्य
धिकरणधर्मावच्छिन्नप्रतियोगिकः। घटनिष्ठप्रतियोगित्वसामानाधिकरण्यात्· नापिविशिष्टाभावोभयाभावरूपः। ज
लघटोभयवत्त्वसत्त्वप्रसङ्गात्· नापिसामान्यरूपेणविशेषा भावविशेषरूपेणसामान्याभावरूपः। पृथिवीत्वेजलनिष्ठ
प्रतियोगित्वव्यापकत्वव्याप्यत्वयोरभावादित्याहुः तन्न अतिरिक्ताभावकल्पनेगौरवात् नचसमनियताभावैक्येननि
खिलव्यधिकरणधर्मावच्छिन्नाभावादीनांगगनाभावात्मकतयागगनाभावस्वीकर्तॄणांचिन्तामणिकारादीनांतदनङ्गी
कारानुपपत्तिरितिवाच्यम् तथापितादृशाभावानामतिरिक्तप्रतियोगिताकल्पनेगौरवात्· तदुक्तं प्रतियोगित्वंहिस्वरू
पसम्बन्धविशेषः सचघटोनास्तीत्यादिसामान्याभावस्थलेप्रतियोगितावच्छेदकघटत्वादिस्वरूपएव· नतुप्रतियो
गिस्वरूपोऽननुगमात्· अभेदेऽधाराधेयभावानुपपत्तेश्च· घटत्वेनपटोनास्तीत्यादिव्यधिकरणधर्मावच्छिन्नाभावादि
स्थलेचप्रतियोगितावच्छेदकादिस्वरूपंनप्रतियोगित्वंकिंन्त्वतिरिक्तमेव· अन्यथाप्रतियोगितावच्छेदकविशिष्टप्र

अ· तियोगिनैव सार्धमभावानां विरोधात् तदवच्छिन्नवत्तित्तादृशाभावासत्त्वप्रसङ्गात्· विवादोप्यतिरिक्तायां प्रतियोगिता-
१२ यामेवेति· एवमेव विशेषरूपेणासामान्याभावादिस्थलेपि प्रतियोगितायामेव विवादो बोध्यः किंच विशिष्टवैशिष्ट्यावगाहि ग
बोधे विशेषणतावच्छेदकप्रकारकनिर्णयस्य हेतुत्वात् पूर्वं घटत्वविशिष्टपटनिर्णयं विना घटत्वेन पटो नास्तीत्या-
दिप्रतीतेरेवासिद्ध्या कथं तयाप्यधिकरणघटत्वादिविशिष्टपटादिविशेषिताभावसिद्धिः यद्यत्र घटत्वविशिष्टपटः
स्यात्तदोपलभ्येतेत्येवं कुत्राप्यापादयितुमशक्यत्वात् नच घटत्वेन पटो नास्तीत्यादौ घटत्वविशिष्टपटनिर्णयं विनापि
घटत्वपटाभावानां विशेष्यविशेषणभावमितिरीत्यैव विशकलितोपस्थितिसत्त्वे चक्षुःसन्निकर्षादिघटितविशिष्टप्रत्यक्षा-
दिसामग्रीसत्त्वे चाभावप्रत्यक्षादिकमुपेयत इति नोक्तदोष इति वाच्यम् रक्तः पीतः पटः कट इति समूहालम्बनानन्तर-
मपि रक्तपटो नास्तीत्यादिभ्रमापत्तेः यत्तु विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रका-
रकज्ञानत्वेन हेतुत्वं न तु निर्णयत्वेनेति मतं तन्न दण्डो रक्तो नवेत्यप्रतीतौ दण्डवान्नवेत्यादिरक्तत्वप्रकारकसंशयात्मक-
विशिष्टज्ञानानन्तरमपि रक्तदण्डवान्नीतोनास्तीत्यादिबुद्ध्यापत्तेः नच उक्तनिर्णयत्वेन हेतुत्वेपि घटत्वसमवायि पट इति
भ्रमनिर्णयसम्भवाद् घटत्वेन पटो नास्तीति प्रतीत्युपपत्तिरस्त्विति वाच्यम् पटो न घटत्वसमवायीति विशेषदर्शिनस्तादृशभ्र-

मत्वासम्भवात् नचतंप्रत्यपिपटेघटत्वसमवायियद्यत्नसः स्यान्नह्युपलभ्येतेत्युभयंप्रत्याहार्यारोपस्य सर्वज्ञानाप्रतिब
ध्यस्यसम्भवान्नोक्तनिर्णयानुपपत्तिरितिवाच्यम् भ्रमस्यव्यधिकरणधर्मनिष्ठप्रतियोगितावच्छेदकत्वादिरूपार्थासाधकत्वे
नव्यधिकरणधर्मावच्छिन्नाभावादेरप्यप्रसिद्धेः यत्त्वभावज्ञानेप्रतियोगिज्ञानस्यकारणतयाघटत्वविशिष्टपटा
दिज्ञानंविनानघटत्वेनपटाद्यभावसिद्धिरितिमतं तन्न तेजस्त्वप्रकारकतेजोज्ञानंविनापीदंतमश्चलतीत्यादाविदन्त्वत
मस्त्वादिनाऽभावप्रत्ययसम्भवेनोक्तकार्यकारणभावेव्यभिचारात् नचप्रतियोगिविशेषिताभावज्ञानत्वस्यकार्यतावच्छे
दकत्वान्नव्यभिचारइतिवाच्यम् एतादृशज्ञानत्वस्यविशिष्टवैशिष्ट्यावगाहित्वरूपतयातदवच्छिन्नंप्रतिविशेषणताव
च्छेदकप्रकारकनिर्णयत्वेनकृप्तहेतुतयैवसकलापत्तिवारणसम्भवेप्रतियोगिज्ञानस्यपृथक्कारणताकल्पनेमाना
भावात् यत्तु विशिष्टबुद्धित्वावच्छिन्नम्प्रतिविशेषणज्ञानस्यकारणत्वेनप्रतियोगिरूपविशेषणज्ञानंविनानघटत्वेनप
टोनास्तीतिप्रतियोगिविशेषिताभावबुद्धिःसम्भवतीतिमतंतदपिनसम्यक्तादृशाभावबुद्धौविशेषणतावच्छेदकप्र
कारकनिर्णयस्यहेतुत्वेनैवसकलापत्तिवारणेविशेषणज्ञानस्यपृथक्कारणताकल्पनेमानाभावात् नचैवंविशिष्ट
बुद्धौविशेषणज्ञानस्यकारणताप्रवादोनस्यादितिवाच्यम् घटादिनाचक्षुःसंयोगाद्यनन्तरंकदाचिद्घटइत्याकारकंस्व

श्री रूपतो घटत्वादिप्रकारकं ज्ञानं कदाचिद्भ्रममित्याकारकं स्वरूपतो द्रव्यत्वादिप्रकारकं ज्ञानं जायत इत्यनुभवसाक्षिकं तन्निर्वाहाय स्वरूपतो घटत्वप्रकारकविशिष्टबु
१५ द्धौ तादृशघटत्वज्ञानत्वेन स्वरूपतो द्रव्यत्वप्रकारकविशिष्टबुद्धौ च तादृशद्रव्यत्वज्ञानत्वेन विशेषणधियो हेतुत्वस्यावश्यकत्वात् न ह्यत्रापि विशेषणता ।
वच्छेदकप्रकारकनिर्णयत्वेन घटत्वादिज्ञानस्य हेतुता सम्भवति घटत्वादौ विशेषणतानवच्छेदकत्वाभावात् नन्वेवं भ्रान्तानाम् राम राम रामम
शब्द पि घटत्वेन पटो नास्तीति व्यवहारमूलकप्रतीतिसत्त्वेनार्थसिद्धौ सत्यामेतत्प्रतीतेरेव शरणत्वेनागत्या व्यधिकरणधर्मावच्छि
न्नाभावादिविषयकज्ञाने युक्तनिर्णयस्य हेतुतानङ्गीकरणीयतया व्यधिकरणधर्मावच्छिन्नाभावादिसिद्धिर्निष्प्रत्यूहै
वेति वाच्यम् घटत्वेन पटो नास्तीत्यादौ घटत्वाभाववान्पटः संयोगेन रूपं नास्तीत्यत्र संयोगाभाववद्रूपं पृथिवीत्वेन ज
लघटोभयं नास्तीत्यत्र पृथिवीत्वाभाववज्जलघटोभयं घटत्वेन द्रव्यं नास्तीत्यत्र घटत्वाभाववद्द्रव्यम् शशशृङ्गं ना
स्तीत्यत्र शशीयत्वाभाववच्छृङ्गमस्तीति रीत्या सर्वत्र सामान्याभावप्रकारकप्रथमान्तविशेष्यकबोधाङ्गीकाराद् व्य
व्यधिकरणाभावाद्यसिद्धेः न चैवमपि द्रव्यत्वेन घटो नास्तीत्यत्र कथं प्रथमान्तार्थे द्रव्यत्वाभावसिद्धिः तस्य व्यापक।
त्वादिति वाच्यम् अत्रागत्या द्रव्यत्वविशिष्टघटाभाववत्त्वस्यैव प्रतीतिविषयत्वोपगमात् न च गवि शशशृङ्गं नास्तीत्यत्रा
नुयोगिवाचकसप्तम्यन्तार्थे एवं तत्र शशीयत्वविशिष्टशृङ्गाभावबोधनाद्व्यधिकरणाभावसिद्धिरिति वाच्यम् शृङ्गे शशी

वत्वभ्रमवतान्ततो बोधसम्भवेप्यभ्रान्तानां बोधानङ्गीकारात् यद्यपि सर्वत्रैव घटत्वेन पटो नास्तीत्यादिशब्देन पटे घटत्वाद्यभा
वद्व्याकारकः शाब्दबोधो न शक्यते जनयितुम् अनुयोगिवाचकपदोत्तरसप्तमीविरहेणानिराकांक्षत्वात् तथापि पदार्थो
पस्थित्यादिमूलकतादृशप्रमानस्य बोधजनने नेच्छया व्युत्पन्नानामपि तथा प्रयोग इति प्रतियोग्यवृत्तिश्च धर्मेण प्रतियो
गितावच्छेदक इति वदतां मणिकाराणामाशयः अथ तादृशाभावासत्त्वे सोन्दडम्प्रति मणिकृता प्रतियोग्यवृत्तिश्चे
त्यादिवाक्यं शब्दत्वेन परार्थानुमानत्वेन वा प्रमाणं प्रदर्शितम् नाद्यः शब्दमात्रस्य प्रमाणत्वे प्रतियोग्यवृत्तिरपि प्र
तियोगितावच्छेदक इत्यादिवादिवाक्यस्यापि प्रमाणतापत्तेः नचाप्तवाक्यं प्रमाणम् घटत्वेन पटो नास्तीत्येकस्मा
द्वाक्याच्छाब्दोस्ति नास्तीति विरुद्धवदतोः सोन्दडमणिकारयोः कस्याप्तत्वमिति निश्चेतुमशक्यत्वात् अतएव घटो
यथार्थः४ नास्तीत्येव प्रतीतिर्नतु पटत्वेनेति यदि पुनरानुभाविको लोकानां स्वरसवाही पटत्वेन घटो नास्तीत्यादिप्रत्ययस्तदा तादृशा
भावनिराकरणं गीर्वाणगुरूणामप्याकर मिति वदता दीधितिकृतापि तयोराप्तत्वं सन्दिह्यते नापरः प्रतियोग्यवृत्तिश्चेत्या
दिवाक्यस्य प्रतिज्ञारूपत्वेपि लिङ्गाप्रदर्शनात् व्याप्तिपक्षधर्मताविशिष्टलिङ्गस्यैवानुमानत्वात् मणिकृता प्रतियोग्यवृ
त्तिमात्रे प्रतियोगितावच्छेदकत्वस्य निराकृतत्वात्तया पक्षे धर्मपदस्य व्यर्थत्वाच्च नच धर्मानुपादानेपि प्रतियोग्यवृत्तिनं प्रति

अ योगितावच्छेदकः तत्त्वेसाधकाभावादितिहेतोरध्याहारेणालाभाद्दोषइतिवाच्यम् प्रतियोग्यवृत्तित्वशरीरेसाध्यताव-
१५ च्छेदके चसामान्यतः प्रतियोगिप्रतियोगित्वयोर्निवेशेसर्वेषामेवकिञ्चिदभावप्रतियोगिनिसम्बन्धतया किञ्चिदभावप्र-
तियोगितावच्छेदकतया पक्षसाध्याप्रसिद्धेः नचविशिष्यवाच्यत्वाद्यभावप्रतियोग्यवृत्तित्वावच्छिन्नेवाच्यत्वाद्यभावीय
प्रतियोगितानवच्छेदकत्वंसाधनीयमितिवाच्यम् समनियताभावैक्यमतेसमवायित्वादिनावाच्यत्वाद्यभावस्यघटत्वादि
नाघटाद्यभावाभिन्नतया समवायिघटादीनामपितथाविधवाच्यत्वाद्यभावप्रतियोगितया तद्वृत्तिसमवायित्वादेर्वाच्यत्वा
द्यभावप्रतियोग्यवृत्तितायादुर्घटत्वात् नचात्रप्रतियोगितैवविशिष्योपादायतत्तत्प्रतियोगितावदवृत्तित्वावच्छिन्ने-
तत्तत्प्रतियोगितावच्छेदकत्वाभावसाधनमितिवाच्यम् वाच्यत्वादिनिष्ठायाः प्रसिद्धसमानाधिकरणाद्वित्वाद्यवच्छिन्ना
भावप्रतियोगितायाउपादानेसिद्धसाधनात् सोन्दडोपाध्यायैरपिव्यधिकरणासमवायित्वादिधर्मस्यसमानाधिकरणधर्मा
वच्छिन्नप्रतियोगितावच्छेदकतानङ्गीकारात् व्यधिकरणधर्मावच्छिन्नायाश्चप्रतियोगितायाउभयवाद्यप्रसिद्धतयावि
शिष्योपादानासम्भवादितिचेन्नअन्यथैवोपपत्तेः धर्मपदस्योपलक्षणत्वेनव्यधिकरणसम्बन्धावृत्तिगगनादिसाधार
णपक्षघटतया समवायितयावाच्यत्वंनास्तिघटत्वेनपटोनास्तीत्यादौविशिष्यसमवायित्वादिकंपक्षीकृत्यवाच्य

त्वादिनिष्ठप्रतियोगितावच्छेदकत्वाभावसाधनेतादृशप्रतियोगितावदवृत्तित्वस्यैवहेतुत्वात् योयद्वृत्तिः सत्तन्निष्ठप्र त
तियोगितानवच्छेदकइतिसामान्यतोव्याप्तिप्रदर्शकेप्रतियोग्यवृत्तित्वेतिहेतुग्रन्थेवीप्साद्यभावेपिप्राथम्येनव्याप्तेर्ल
भसम्भवात् नचसोन्दइमतेवाच्यत्वाद्यवृत्तिमात्रस्यैवव्यधिकरणत्वेनवाच्यत्वादिनिष्ठप्रतियोगितावच्छेदकतयोभय
सम्भवतदृष्टान्तासम्भवइतिवाच्यम् अन्वयदृष्टान्तासत्त्वेपिव्यतिरेकेणावाच्यत्वादिनिष्ठोभयत्वादीनांतन्निष्ठप्रतियोगि
तावच्छेदकानांदृष्टान्तत्वसम्भवात् अवच्छेद्यावच्छेदकमात्रवर्त्तिन्यांयोयद्वृत्तिः सतदनवच्छेदकइतिसामा
न्यव्याप्तौकार्यत्वादिव्यधिकरणत्वेनकार्यत्वाद्यनवच्छेदकपरमाणुत्वादीनांवान्वयदृष्टान्तत्वसम्भवाच्चनचभ्रमज्ञा
नीयविषयतावदवृत्तिरपिरजतत्वादिकंशुक्त्यादिनिष्ठविषयतावच्छेदकमेवेतिव्याप्तेर्भङ्गइतिवाच्यम् विषयतान्य
यद्वद्वृत्तिरित्यस्यैवयुक्तत्वात् नचैवमपिकालिकादिसम्बन्धेनपटादिवृत्तिघटत्वादेः समवायादिनापटादिनिष्ठप्रति
योगितावच्छेदकत्वखण्डनाय तत्तत्सम्बन्धेनप्रतियोग्यवृत्तित्वंतत्तत्सम्बन्धेनप्रतियोगितानवच्छेदकत्वसाधनेपै
क्षतावच्छेदकतयाहेतुतयावाविवक्षणीयम् तथाचसमवायादिसम्बन्धेनवाच्यत्वादिवृत्तित्वाप्रसिद्ध्योक्तरीत्यासम
वायादिसम्बन्धेनघटत्वादिनावाच्यत्वाद्यभावखण्डनानुपपत्तिरितिवाच्यम् प्रतियोग्यवृत्तित्वमितिग्रन्थेनवाच्यत्वा

सिद्धान्तपूर्वकल्पेविशेषमाह ३

समवायेन घटत्वाभाववद्व्याप्यत्वम्१ वाच्यत्वसमवायेन घटत्वावच्छिन्नेन२

अ दिप्रतियोगिनिष्ठस्यावच्छेदकताघटकसम्बन्धावच्छिन्नाभावस्य प्रतियोगित्वं घटत्वादौ विवक्षणान्न वाव्याप्यवृत्तेः संयो-
१६ गिसामान्याभावप्रतियोगितावच्छेदकस्य संयोगात्मकधर्मस्य प्रतियोगिनिष्ठाभावप्रतियोगितयोक्तधर्मस्य पक्षतावच्छेदक-
त्वबाधस्य हेतुत्वे च व्यभिचारस्य दुर्वारत्वेति वाच्यम् उक्तधर्मे प्रतियोगिनिष्ठभेदप्रतियोगितानिरूपितस्यावच्छेदकताघटकसम्बन्धा-
वच्छिन्नावच्छेदकत्वस्याङ्गीकारादिति इदं पुनरिहावधेयम् अत्र मूलावच्छिन्नो वृक्षो न कपिसंयोगीति प्रतीत्यामनभेदेन भेद-
स्याप्यव्याप्यवृत्तित्वे सुतरामगतिः उक्तहेतोश्च विपक्षवृत्तितया न साध्यसाधकत्वम् हेतुसाध्ययोरत्यन्ताभाववत्तयानित्यत्वेन का-
र्यकारणभावादिघटितव्याप्त्यभावेन शिथिलमूलतया विपक्षबाधकतर्कानवकाशात् एवं घटत्वेन पटो नास्तीत्याकारका-
प्यभावप्रत्ययस्यानुभाविकतया प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वमभावप्रत्ययोऽवगाहत इत्यपि ना-
नियमः तादृशप्रतीत्या स्वातन्त्र्येणाभासमाने घटत्वादौ घटनिष्ठप्रतियोगितावच्छेदकत्वावगाहनात् अन्यथा घटत्वेनेत्याका-
रतानुपपत्तेः न च तृतीयान्तस्य घटेऽन्वयः स्वरिष्यमाणत्वात् तथा च घटत्वेन पटो नास्तीत्यादावपि घटत्वादौ पटादिनिष्ठप्र-
तियोगितावच्छेदकत्वावगाहनं निराबाधमेवेति व्यधिकरणधर्मावच्छिन्नाभावसिद्धिर्निष्प्रत्यूहैव न च तत्र व्यधिकर-
णधर्मादेरवच्छेदकत्वावगाहनसम्भवे व्यतिरिक्ताभावकल्पनागौरवभयेन तादृशप्रतीतेः पटाद्यधिकरणकघटत्वाद्यभावा

वगाहित्वमेव स्वीक्रियत इति वाच्यम् न जात्यन्ताभावबोधनेऽनुयोगिबोधकपदोत्तरं सप्तम्यपेक्षणात् · प्रतियोग्युत्तरतृ
तीयानुपपत्तेः। असति बाधे तच्छब्दोल्लेखिप्रतीतेः नच्छब्दप्रतिपाद्यार्थविषयकत्वपरित्यागानौचित्याच्च पटे घट
त्वाद्यभावस्य घटत्वेन पटो नास्तीत्यादिशब्दात्कथमप्यप्रतीतेः प्रतीतिबलात्तदर्थसिद्धौ पदार्थान्तरकल्पनागौ
रवस्य फलमुखत्वेनाबाधकत्वात् न च प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिर्णयरूपकारणबाधेन तादृशप्रतीतेः।
व्यधिकरणधर्मावच्छिन्नाभावावगाहितानसम्भवतीति वाच्यम् घटत्वाद्यवच्छिन्नधर्मिकघटत्वादिप्रकारका।
निर्णयत्वेन प्रतियोगिज्ञानस्य हेतुतायां मानाभावात् · चक्षुःसन्निकर्षादिसत्त्वे तादृशनिर्णयं विनैव घटत्वेन पटो
नास्तीत्याद्याकारस्य घटत्वादिविशेषितपटादिवैशिष्ट्यावगाहिनोऽभावप्रत्ययस्य स्वीकारात् वस्तुतस्तु कुत्राप्य
भावबुद्धौ स्वातन्त्र्येण प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिर्णयस्य हेतुता नास्ति · फलाभावात् · न चैतत्कल्प
ने प्रतियोग्यनुयोगिज्ञानशून्यकाले नास्तीत्याकारकप्रतियोग्यविषयकाभावप्रत्ययस्य घटत्वादिनिर्विकल्पकानन्तरं
विशेष्यविशेषणाभिनिरीत्या घटाद्यभावप्रत्ययस्य चापत्तिरिति वाच्यम् प्रतियोगिज्ञानहेतुतामतेऽप्यभावः प्रतियोगिन
या घटवानित्यादिरूपप्रतियोगिज्ञानविरोधिनोऽभावः प्रतियोगितया घटाभाववानिति बाधादिरूपप्रतियोगिनिर्णयस्य

अ·
१७

सत्वेप्रतियोग्यविषयकाभावप्रत्यक्षापत्तेर्दुर्वारत्वात् यदि च नियमतोधर्मितावच्छेदकतायावगाहिज्ञानस्यैवबाधादि
बुद्धिप्रतिबध्यत्वपात्तत्प्रतिबध्यनिर्धर्मितावच्छेदककघटीयइत्याकारप्रतियोगिविशेषिताभावज्ञानेबाधकाभावा
त् प्रतियोग्यविषयकाभावप्रत्ययोनापादयितुंशक्यतइत्युच्यतेतथापितादृशबाधदशायांप्रतियोगिनिरूपितध
र्मितावच्छेदकतानापन्नाभावत्वप्रकारकस्यस्वातन्त्र्येणप्रतियोगिविषयकस्यच· नास्ति· घटीयश्चेत्याद्याकार
कसमूहालम्बनप्रत्यक्षस्यापत्तिर्दुर्वारायदि च प्रतियोगितासम्बन्धेन प्रतियोगिप्रकारतानिरूपितधर्मितावच्छे
दकतापन्नाभावत्वप्रकारतासम्बन्धेनलौकिकप्रत्यक्षंप्रत्यभावत्वभेदस्यपृथक्कारणतांकल्पयित्वा·नास्ति·घटीयश्चेत्या
पत्तिर्वार्यते तदा तावतैवसकलापत्तिवारणादलंप्रतियोगिज्ञानहेतुतया नन्वेवमपिप्रतियोग्यविषयस्याभावत्वप्र
कारकप्रत्ययस्यापत्तिर्विनाप्रतियोगिज्ञानहेतुतांनशक्यतेवारयितुमितिवाच्यम्प्रतियोगिज्ञानंविनाप्रतियोग्यविष
यकस्येदन्त्वप्रमेयत्वादिनाऽभावप्रत्यक्षस्य·इदन्त्वादिरूपतादृशविशेषणाज्ञानासत्वेतुतादृशाभावनिर्विकल्पस्यैवे क ३
ष्टत्वात् किंचाभावनिर्विकल्पकानुपगमेपिप्रतियोगिज्ञानहेतुतयापीदन्त्वादिनाऽभावप्रत्यक्षवारणासम्भवः। इदन्त्वा
दिनाऽभावप्रत्यक्षेव्यभिचारवारणायनतुप्रतियोगिविशेषिताभावत्वप्रकारकाभावप्रत्यक्षंप्रत्येवतत्प्रतियोगिज्ञान

अभावाभावत्वेइत्याकारस्य

१४ सहेतुतायावाच्यतयाप्रतियोग्यविशेषिताभावप्रत्यक्षेत्वेन हिरहस्याकिञ्चित्करत्वात् यदि च विशेषणानवच्छिन्नविषयतासं
म्बन्धेनप्रत्यक्षमात्रंप्रत्यभावभेदस्य हेतुतास्वीकृत्य नेत्याकारकाभावनिर्विकल्पकंचोर्य्यते तदा ममापि तस्य तथैव वारणीय
त्वादलंप्रतियोगिज्ञानादीनां हेतुत्वेन वस्तुतस्तु यादृशफलंक्वचित्प्रसिद्धंतस्यैवापत्तिः सम्भवति क्लृप्तसामग्रीबलात्
नतु सर्वथाप्रसिद्धस्याभावनिर्विकल्पकस्यापादकाभावात् अन्यथा गोरश्वाश्वादीनामपि शृङ्गमापद्येत। अत्र घटत्वा
द्यवच्छिन्नप्रतियोगिताकाभावस्य यदाभानं तदा निर्विकल्पकोपस्थितद्रव्यत्वादेर्विशेष्ये विशेषणमितिरीत्या
घटाद्यंशे भानापत्तिरुक्तनिर्णयादिबाधेन न शक्यते वारयितुम् तादृशाभावस्य द्रव्यत्वावच्छिन्नप्रतियोगिताकत्व
विरहेण तज्ज्ञाने द्रव्यत्वादिप्रकारकनिर्णयस्यानपेक्षणादित्यादिदोषनिरसनं मतद्वयेपि तर्ककुशलैरूहनीयम् यत्तु।
अनाहार्य्यप्रतियोगितावच्छेदकविशिष्टप्रतियोगिप्रकारकोपलम्भविरहो विशेष्यीभूतधर्म्मिप्रत्यासन्नाभावग्रहे हेतुः
तथाच यस्यस्वसो घटत्वादिविशिष्टपटादिप्रकारकभूतलादिविशेष्यक घटत्वेन पटवद्भूतलमित्याकारकोऽनाहा।
र्य्यभ्रमोऽप्रसिद्धः नदीयोऽत्र घटत्वेन पटो नास्तीत्याकारकप्रत्ययो न व्यधिकरणधर्मावच्छिन्नाभावमवगाहितुं शक्यनेन तदी
यतादृशप्रतियोग्युपलम्भाभावरूप— स्य तत्पुरुषीयतादृशाभावप्रत्यक्षकारणस्याप्रसिद्धेरिति तत्पुरुषीयतादृशप्रत्यय

पटत्वेनपटोनास्तीति।

अ स्वपदाद्यनुयोगि —कघटत्वाद्यभावविषयकत्वेङ्गीकारेसर्वत्रैवतद्विषयकत्वमुचितम् एकाकारप्रतीतेःपुरुषभे
१८ देनविषयतावैचित्र्यविरहादितिमिश्रोक्तव्यधिकरणधर्मावच्छिन्नाभावनिराकरणपन्थाः सोपिनसाधीयान्।
तदभावबुद्धौस्वप्रतियोगितावच्छेदकविशिष्टस्वप्रतियोगिमत्त्वोपलम्भाभावत्वेनैककारणतायाःसत्वात्तु
गमेनद्रव्येचतयाविशिष्टेवकारणताकल्पनस्यावश्यकत्वेयत्रघटवद्भूतलमित्यादिरूपतादृशोपलम्भप्रसिद्धिस्त
त्रैवतादृशोपलम्भानन्तरंघटाभाववद्भूतलमित्याद्याकारकाभावप्रत्ययवारणायतदभावेहेतुतोपगमाद्व्यधिकरणधर्मा
वच्छिन्नाभावबुद्धौबाधबुद्धेः क्वचिदप्रसिद्ध्यातदभावेहेतुत्वासम्भवेपिसन्निकर्षादिघटितसामग्रीतस्तादृशाभावप्र
त्यक्षोत्पत्तौबाधकाभावात् यद्विचाभावाधिकरणविशेष्यकप्रतियोगिप्रकारकोपलम्भस्यकाचित्प्रतिबन्ध———
कत्ववत् पूर्वोक्तसमूहालम्बनोद्यनन्तरंरक्तपटोनास्तीत्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्ययापत्तिभयेनकचित्प्रतियो
गितावच्छेदकप्रकारकनिर्णयस्यहेतुताविभाव्यतेनतयाप्यधिकाभावबाधकसामान्यकार्यकारणभावानङ्गीका
रात्तदोषः एतन्मतेघटःपटत्वेननघटइतिप्रतीत्याव्यधिकरणधर्मावच्छिन्नभेदोप्यतिरिक्तः अतएवव्यधिकरणध
र्मस्यात्यन्ताभावप्रतियोगितावच्छेदकत्ववदन्योन्याभावप्रतियोगितावच्छेदकतापामप्यविवादइतिगदाधरोक्तिः

तथासमवायित्वयावाच्यत्ववद्भेदोपिद्रष्टव्यइतिपक्षधरोक्तिरपिसंगच्छते. एवंसंयोगेनघटत्वेनपटोनास्तीत्यादिप्रतीत्या
संयोगेनघटत्वेनपटवद्भूतलमित्येवंनिर्णयसत्त्वेभूतलेसंयोगेनघटत्वेनपटोनास्तीतिनप्रत्ययः किंतुसमवायेननन्ना
स्तीतिप्रतिबध्यप्रतिबन्धकभावानुरोधेनचव्यधिकरणधर्मावच्छिन्नाभावादिप्रतियोगितातत्तत्सम्बन्धावच्छिन्नापि
बाध्या तदुक्तंदीधितौ व्यधिकरणधर्मावच्छिन्नोपिचेदभावः प्रामाणिकस्तदासर्वैसम्बन्धैस्तत्प्रतियोगिता वच्छिद्य
न्नामिति. एवंसामान्यरूपेणविशेषाभावादयोपितत्तत्प्रतीतिबलेनांगीकार्याप्रतिबध्यप्रतिबन्धकभावानुरोधेनचा
तिरिक्ताएवकल्पनीयाः तथाचातिरिक्ताभावानङ्गीकर्तृमणिकाराद्यङ्गीकर्तृसोन्दडादिसु समदर्शिभ्यां जल्पप्रती
तीनामेवमध्यस्थतयायदिपटोनास्तीत्यादिप्रतीतिवद्घटत्वेनपटोनास्तीत्यादिप्रतीतीनांप्रामाण्यंतातदातिरिक्ता
भावाङ्गीकारेपिनदोषः एवमेवोक्तंदीधितिकृतापि अभावप्रत्ययोहिघटत्वादिविशिष्टघटादेः प्रतियोगित्व
मवगाहमानोविशेषणस्यापिघटत्वादेस्तदवच्छेदकत्वमवगाहते. नस्वातन्त्र्येण. घटोनास्तीत्येवप्रतीतेर्नतु
पटत्वेनेति यदिपुनराणुभाविकोलोकानांखरसवाहीपटत्वेनघटोनास्तीत्यादिप्रत्ययस्तदानादृशाभावनिराक
रणंगौरवाणांगुरूणामप्यशक्यमिति नचातिरिक्तप्रतियोगिताकल्पनमेवगौरवमितिवाच्यमत्रनत्तप्रतीतीनाव्य

अ थैन्वकल्पनापेक्षे तादृशगौरवस्याकिञ्चित्करत्वात् — वस्तुतस्त्वभेदेप्यवच्छेद्यावच्छेदकभावस्वीकाराद्यथा सामान्या
१९ भावीयप्रतियोगितायास्तावच्छेदकस्वरूपान्तथा तदतिरिक्ताभावस्थले प्रतियोग्यंशे प्रकारीभूतासाधारणधर्मएव प्रतियो
गितारूपतयावच्छिद्य तां स्वावच्छेदकधर्मेण नचैवमपि घटवति घटत्वेन पटो नास्तीत्यादि प्रतीत्यनुपपत्तिः अभावानां प्र
तियोगितावच्छेदकधर्मावच्छिन्नवत्तामात्रेण विरोधादिति वाच्यम् सोन्दडमते प्रतीतिबलाद्व्यधिकरणधर्मादेः प्र
तियोगितावच्छेदकत्वसिद्धौ सत्यां प्रतियोग्यंशे प्रकारीभूतधर्मविशिष्टप्रतियोगितावच्छेदकावच्छिन्नेनैव साधमना
यन्त्याभावानां विरोधिताङ्गीकारात् अत्रात्यन्ताभावत्वेनान्योन्याभावत्वेन च तेषां सङ्ग्रहात्र चतुर्धाभावविभागानुपपत्तिरा
पीति दिङ्मात्रं प्रदर्शितमधिकन्त्वन्यत्रान्वेषणीयं तर्करसिकैरिति॰ पटो नास्ति पटो न पटाभाव इत्यादौ सर्वत्राभावे प्रतियो
गिनः पटादेरन्वयितावच्छेदकपटत्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयः नतु प्रतियोगितामात्रेण यद
वत्यपि पटो नास्तीति प्रत्ययापत्तेः पीतपटो नास्तीत्यादौ तु पीतपटत्वस्यान्वयितावच्छेदकत्वे तादृश धर्मावच्छिन्नप्रतियो
गिताकत्वमेव संसर्गः नतु पीतत्वादिप्रत्येकावच्छिन्नप्रतियोगिताकत्वं पीतघटस्य नीलपटस्य चाधिकरणे तादृशप्र
योगापत्त्यापत्तेः पीतोपलक्षितस्य पटत्वमात्रस्यान्वयितावच्छेदकत्वे तु पटत्वावच्छिन्नप्रतियोगिताकत्वमेव तथा।

संयोगेनपटोनास्तीत्यादौतुतृतीयाविभक्तेरवच्छिन्नत्वमर्थः पदार्थः पदार्थेनान्वयइत्यादिव्युत्पत्तिविरोधेनसंसर्गीभू
तप्रतियोगितायांतदन्वयासम्भवात् नाप्यभावान्वयिप्रतियोगिताकत्वम् संयोगेनपटाभावस्यैवसमवायेनपटविशि
ष्टद्रव्यत्वाभाववत्तयासमवायेनतन्तौपटोनास्तीतिव्यवहारापत्तेः वैशिष्ट्यंचात्रसंयोगेनपटाधिकरणेसमवायेनव
त्तित्वरूपम् अपितुतृतीयान्तसमभिहारस्थलेतृतीयार्थस्यैवप्रतियोगित्वस्यप्रतियोगिसंसर्गतयापिभानमि
तिनोक्तदोषः समवायावच्छिन्नपटप्रतियोगिताकाभावस्यतन्तौविरहात् यदिचोक्तप्रतियोगित्वस्यतृतीयार्थत्वे
तस्यापिसम्बन्धान्तरभानापत्तिः शाब्दपदार्थसंसर्गभानेनेयत्यादित्युच्यते तदास्तुपटत्वावच्छिन्नत्वस्यैवसंयोगा
दितन्तुसम्बन्धावच्छिन्नत्वस्यापिप्रतियोगित्वांशेसंसर्गमर्यादयैवभानम् नचयत्रसंयोगेनपटोनास्तितत्रसमवा
येनतन्तौनास्तीतिप्रमित्यापत्तिः अपदार्थीभूततादृशसंसर्गस्यसर्वत्रैवभानसम्भवादितिवाच्यम् तृतीयान्तसमभि
व्याहारस्यनियामकत्वादेवसकलापत्तिवारणात् एवमन्यत्रापि गदाधरास्तु घटत्वेनपटोनास्तीतिवाक्यादिवपट
त्वेनपटोनास्तीत्यादिवाक्यान्नशाब्दबोधः गम्यतेकर्मेत्यादिप्रयोगापत्तिभयेनतद्धितदन्वयासम्भवेनप्रथमान्तार्थप
टत्वाद्यवच्छिन्नेतृतीयान्तोपस्थाप्यपटत्वाद्यवच्छिन्नत्वान्वयासम्भवात् नापिप्रथमान्तार्थेतदभावान्वयः तत्रपट

अ· त्वस्यैव सत्त्वात्· नापि तृतीयार्थावच्छिन्नत्वस्य संसर्गीभूतप्रतियोगितायामन्वयः। पदार्थैकदेशसंसर्गस्यैवाकाङ्क्षा
२४ नियम्यत्वात्· अपदार्थेन पदार्थस्य योग्यताविरहाच्च न च प्रथमान्तपदोपस्थाप्यतावच्छेदके पटत्वादौ तृतीयार्थाभे
देन पटत्वादीनामन्वयः। धान्येन धनवानित्यादौ तृतीयया अभेदबोधनादभेदप्रकारकबोधविरुद्धविभक्तिराहित्यान
पेक्षणादिति वाच्यम् पटत्वादिजातेः स्वरूपत एव पटादिपदशक्यतावच्छेदकतयाऽन्वयितावच्छेदकरूपेणा
नुपस्थितेस्तत्र पदार्थान्तरान्वयानुपपत्तेः। अभेदेन पटपदार्थैकदेशेऽन्वयानुपपत्तेश्च नापि पटवत्त्वान्न्येण प्र
तियोगितया पटत्वस्याभावेऽन्वयः। एकस्यैव पटाभावस्योभयप्रतियोगिकतया पटत्वेन पटो ध्वस्त इत्यत्र पटत्वन्ध्वस्त
म्पटे समवायेन पटो नास्तीतिवत्पटत्वेन नास्तीत्यादिव्यवहारापत्तेः तृतीयार्थान्वयानुपपत्तेश्च किन्त्वत्र विशकलितपदा
र्थोपस्थित्यादिमूलकतादृशमानसबोधजननेच्छया व्युत्पन्नानां तथा प्रयोग इत्याहुः परे तु यदि संयोगेन पटत्वेन पटो
नास्तीत्यादिवाक्याच्छाब्द एवेत्याग्रहस्तदा तु संयोगाद्यवच्छिन्नपटत्वाद्यवच्छिन्नप्रतियोगिताकत्वमेवाभावे प
टादीनां संसर्गः तृतीयान्तयोरुक्तविलक्षणसंसर्गीभूतप्रतियोगितायां तात्पर्यग्राहकत्वादेवोपपत्तेः एवं घटत्वेन पटो
नास्तीत्यादावपीत्याहुः पीतः शङ्खो नास्तीत्यादिशाब्दबोधस्तु न शङ्खत्वावच्छिन्नतया प्रतियोगित्वमवगाह

ते॰ तन्मात्रस्यान्वयितानवच्छेदकत्वात्॰ शङ्खवत्त्वयानिश्चितेधर्मिण्यपितादृशप्रयोगात् परन्तुपीतशङ्खत्वा
वच्छिन्नप्रतियोगितात्वेनसंसर्गमर्यादयाप्रतियोगित्वमवगाहतेनञादिपदानांयद्धर्मविशिष्टेवैशिष्ट्यावगाहि।
त्वोपस्थाप्याभावधर्मिकान्वयबोधजनकत्वं तद्धर्मावच्छिन्नप्रतियोगितात्वेनप्रतियोगिनासंसर्गकान्वयबोध
जनकत्वमितिव्युत्पत्तेः इयांस्तुविशेषः घटोनास्तीत्यादिशाब्दसांसर्गिकीप्रतियोगितावगाहित्वमप्रसिद्धेनघटत्वा
द्यवच्छिन्नप्रतियोगितात्वेनेव॰ पीतःशङ्खोनास्तीत्यादौतुपीतशङ्खत्वाद्यवच्छिन्नप्रतियोगितात्वेनाप्रसिद्धेने
वेति कौस्तुभकारास्तु केवलप्रतियोगिनासम्बन्धेनाभावेप्रतियोगिनोभानाङ्गीकारे यत्किञ्चिद्घटवत्यपिघटान्त
राभावसत्त्वाद्घटोनास्तीत्यादिप्रतीत्यापत्तिरतोनञ्समभिव्याहारेन्वयितावच्छेदकावच्छिन्नप्रतियोगितानिरू
पितानुयोगितासम्बन्धेनैवाभावांशेप्रतियोगिनोभानमितिव्युत्पत्त्यङ्गीकार्यम् नचकम्बुग्रीवादिमान्नास्तिप्रमे
यघटोनास्तीत्यादौगुरुधर्मकम्बुग्रीवादिमत्त्वाद्यवच्छिन्नप्रतियोगित्वाप्रसिद्ध्यानोक्तव्युत्पत्तिसम्भवइतिवाच्यम
ऽगत्यागुरुधर्मस्याप्यनुभवबलेनप्रतियोगितावच्छेदकताङ्गीकारात् नचतथापिपीतःशङ्खोनास्तीत्यादावग
तिः पीतशङ्खत्वादेर्विशिष्टस्यान्वयितावच्छेदकस्याप्रसिद्धत्वादितिवाच्यम्तत्रपीतपदस्यपीतत्वप्रकारकत्वा

अ नविषयेलाक्षणिकतयातादृशज्ञानविषयत्वविशिष्टशङ्खत्वस्यप्रसिद्धत्वेनादोषात् । एवमन्यत्रापि । एतेना
श पुष्पकरिापांजलंनास्ति चैत्रस्यज्ञानंनास्ति तस्माद्यत्रैवधोऽवधइत्यादावुत्पत्तिभङ्गोपिपरास्तः तत्रजलादिपद
स्य पदस्यजलत्वाद्यवच्छिन्नेनसमभिव्याहृतवधशब्दस्यपापसाधनवधत्वाद्यवच्छिन्नेलाक्षिणिकत्वोपगमादित्याहुः
केचित्तु नञ्समभिव्याहारभेदेनव्युत्पत्तिभेदात्पीतःशङ्खोनासीत्याद्युक्तस्थलेउत्पत्त्यन्तरेनङ्गीकारेणाप्रतियो
गिनानिरूपितानुयोगितासम्बन्धेनैवप्रतियोगिनोभावेऽन्वयेनलक्षणांविनैवनिर्वाहइत्याहुः अथभूतलेघटो
नास्तीत्यादावत्यन्ताभावबोधोभूतलेनघटइत्यादौचान्योन्याभावबोधइत्यत्रकिंनियामकंवैपरीत्येनापिबोधे बाध
काभावादितिचेन्न नञ्विनिर्मोकेयत्रभेदसम्बन्धेनान्वयबोधस्तत्रनञात्यन्ताभावोबोध्यते यत्रचतद्विनिर्मोकेः
भेदेनान्वयस्तत्रनञान्योन्याभावोबोध्यतेइत्युपगमात् नचतन्नञ्विनिर्मोकेक्वचिद्भेदेनान्वयबोधःक्वचिच्चाभेदे
नेत्यत्रैवकिंनियामकमितिवाच्यम् शब्दस्वभावस्यतत्तदाकाङ्क्षाज्ञानादेरननुगतस्यैवतत्रनियामकत्वाङ्गीकारा
त् यत्तुभेदेनान्वयबोधेविरुद्धविभक्तिमत्त्वमभेदेनबोधेतुविरुद्धविभक्तिराहित्यमेवनियामकंदधिसुन्दरमित्यादौच
लुप्तविभक्तेरनुसन्धानादेवबोधइत्याहुस्तन्न विरुद्धविभक्तिराहित्यस्यतादृशबोधनियामकत्वेनीलादिपदस्यविरुद्ध

विभक्तिमत्त्वभ्रमकालेपिनीलघटमानयेत्यादावभेदान्वयबोधापत्तेः। तज्ज्ञानस्यतथात्वेचविरुद्धविभक्तेरनुपस्थिति
कालेउक्तस्थलेविद्यमानस्यापिविरुद्धविभक्तिराहित्यस्यज्ञानासम्भवेनशाब्दबोधानुपपत्तेः नचविरुद्धविभक्ति
मत्त्वेनाज्ञायमानत्वंतादृशबोधेनियामकमितिवाच्यम्उक्तस्थलेमैत्रस्यविरुद्धविभक्तिमत्त्वेनज्ञानेचैत्रस्यापि
तादृशबोधानुपपत्तेः नचचैत्रीयतादृशबोधेविरुद्धविभक्तिमत्त्वेनचैत्रेणाज्ञातत्वंनियामकमितिवाच्यम्
तथासतिपुरुषभेदेनाननुगतहेतुतापत्तेः किंचविरुद्धविभक्तिमत्त्वेनाज्ञायमानत्वंनाम वस्तुगत्याविरुद्धायाविभ
क्तिमत्त्वेनाज्ञायमानत्वं विरुद्धविभक्तित्वावच्छिन्नप्रकारकज्ञानाविशेष्यत्वंवा नाद्यः नीलोघटइत्यादौनी
लादिपदोत्तरविभक्तेरमपदत्वादिभ्रमदशायामप्यभेदान्वयबोधापत्तेः नान्त्यः नीलोघटमित्यादावमादेर्वि
शेषणावाचकपदानुत्तरत्वरूपविरुद्धत्वंविभक्तित्वंचाजानतामभेदान्वयबोधप्रसङ्गात् लोकंपचतिधान्य
न्धनवानित्यादौपाकादौलोकाद्यभेदान्वयबोधेविरुद्धविभक्तिराहित्यासम्भवाच्च अत्रवैयाकरणास्तु नञ
र्थोनाभावः तथासत्यघटइत्यादौघटभिन्नइतिबोधेतत्पुरुषस्योत्तरपदार्थप्राधान्यभङ्गापत्तेः किंचासइत्या
दौसञ्ज्ञोपसर्जनीभूतास्तुनसर्वादयइतिनिषेधात्सर्वनामकार्याभावप्रसङ्गः। अतिसर्वाइत्यादिवत् अभावे

यथा यादर्थो नञ्चोर्नार्थ इत्याहुः शवरस्वामिनः २

अ प्रतियोगिनो विशेषणत्वस्य सर्वसम्मतत्वसिद्धत्वेनोपसर्जनत्वात् इतरपदार्थविशेषणत्वस्यैवोपसर्जनत्वात्तस्मादारोप
२२ विषयत्वं नञर्थः। आरोप एव वा। विषयत्वं तु संसर्गः। एवं चाघट इत्यादावारोपितो घट इत्यादिबोधः। असद् इत्यादौ च
तत्पदार्थस्य विशेष्यत्वान्न दोषः। घटो नास्तीत्यादावप्यारोपितघटास्तित्वमित्यादिबोधः। एवं च घटो नास्तीत्यादावाधि
कोऽभावमभावज्ञानं चादाय नञर्थाविशेष्यको बोधः प्रतियोगिज्ञानप्रतिबन्धकत्वादिकं चाङ्गीकरणीयमित्याहुः।
वैयाकरणानव्यास्तु समास एवारोपितत्वं नञर्थः। असमासे घटो नास्तीत्यादौ त्वभाव एव नञर्थः। अनुभवसिद्धाभावबु
द्धेरपलापे मानाभावादित्याहुः। न द्रुमपममप्यसत्सर्वत्राभावबोधस्यानुभविकत्वात् आरोपत्वस्याननुगतस्य दुर्वच
त्वेनारोपस्यापि नञर्थत्वे गौरवाच्च न चोक्तदोषः। अर्धपिप्पलीत्यादितत्पुरुषस्य पूर्वपदार्थप्राधान्येन तत्पुरुषस्यो
त्तरपदार्थप्राधान्यनियमस्यैवासिद्धेः नाप्यसदादौ सर्वनामकार्याभावप्रसङ्गरूपो दोषः तत्र तच्छब्दस्य सर्व
नामसंज्ञायां तत्त्वदोः सुलोपोऽकोरनञ्समासे हलीति ज्ञापकादेव सम्भवात् अन्यथा हलङ्याब्भ्य इत्यादिसू
त्रेण सुलोपे स शिव इत्यादावेतत्सूत्रप्राप्तेरेवाभावात्। अकोरित्यकारसहितत्वाद् इत्यासर्वनाम्न एवास्य
प्राप्तेः तस्मात्सर्वत्र नञर्थोऽभाव एव एतेन तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता अप्राशस्त्यं विरोधश्च न

अत्रा ब्राह्मणो वेदपाठकः शिवेरपापमश्नौरनम्नः ३ अनुदरा कन्या ४ राजपुरोहितो ब्राह्मणः ५ अशुराश्च विद्यारतिक्रमाद्दृशरणामः १

जर्थाः षट्पदकीर्त्तिताइत्यपि परास्तम् सादृश्यादिबोधस्य लक्षणयैवोपपन्नत्वभावमात्रस्यैव नञर्थत्वात् अत्राभाक
रणस्तु भूतलादिरूपाधिकरणेनैवाभावव्यवहारोपपत्तावतिरिक्ताभावे मानाभावात् अधिकरणातिरिक्ताभावस्वरूपस्य
दुर्वचत्वाच्च नातिरिक्तोऽभावः तथाहि नतावत्कपालाद्यतिरिक्ते ------ कपालाद्यधिकरणके घटादिध्वंसे प्रमाणमस्ति
कपालाद्यतिरिक्तघटादिध्वंसस्यानुभवात् तदुक्तं दृष्टलावद्यं घटोऽत्रेयेन नस्थलयामुद्गरेदृष्टाव परं संहृतेति परिमितोऽभावो नदृ
ष्टः परः तेनाभाव इति स्मृतिः कृतिहिता किंचात्र तत्कारणसाधीना कलशस्य केवलमियं दृष्टा कपालावलीति यत्तु क्रममधिकरणाति
रिक्तध्वंसानङ्गीकारे मोक्षस्यासाध्यत्वापत्तिः मुख्यात्यन्तिकदुःखध्वंसरूपतया तस्य चात्मरूपतया नित्यत्वेनासाध्यत्वादिति तन्नुच्छम्
नित्यसुखाभिव्यक्तेरेव मोक्षत्वात् भवतु वाऽऽत्यन्तिकदुःखध्वंसस्य मोक्षत्वं तथापि न क्षतिः मोक्षस्यात्मरूपतया नित्यत्वेपि मोक्षत्वा
वच्छिन्नाधिकरणतापन्नस्याध्यत्वोपगमात् नैयायिकमतेप्यधिकरणतापन्नातिरिक्तत्वात् वस्तुतस्तु घटस्य पृथिवीत्वेन दण्डा
द्यसाध्यत्वेपि घटत्वेन तत्साध्यत्ववत् आत्मरूपमोक्षस्यात्मत्वेनासाध्यत्वेपि दुःखध्वंसत्वेन साध्यत्वोपगमान्न दोषः अत एव
घटादिध्वंसस्य कपालादिरूपतया मुद्गरपातादिसामग्रीसाध्यत्वानुपपत्तिः कपालादेः सिद्धत्वादित्यपि निरस्तम् अन्वयव्यतिरे
काभ्यां घटादेः स्वसामग्रीसाध्यत्ववत् अधिकरणात्मकघटादिध्वंसस्यापि ताभ्यां घटादिध्वंसत्वेन मुद्गरपातादिसामग्रीसाध्यत्वे

पदार्थो द्विविधः भावोऽभावश्चेति तत्कौ मजात्याद्विभागेनेत्सम १

अ० पगमेनादौत्वात् अभावत्वं सादिवृत्ति पदार्थविभाजकोपाधित्वात् भावत्ववदित्यनुमानस्य च विपक्षबाधकतर्का
२३ भावेन तदसाधकत्वात् कपालरूपध्वंसस्यापि सादित्वेन सिद्धसाधनत्वाच्च ननु तत्त्वज्ञानीनामदृष्टोत्पत्तिवारणाय मि
थ्याज्ञानजन्यवासनाध्वंसः आद्यतत्त्वज्ञानध्वंसो वाऽदृष्टे प्रतिबन्धकः कल्प्यत इति ध्वंससिद्धिर्दुर्वारेति चेन्न प्रतिबन्धक
त्वकल्पने गौरवात् उक्तापत्तेर्वासनानामनुगतवासनात्वेन हेतुत्व एव वारणसम्भवाच्च वस्तुतः प्राचीननैयायिकानां घ
टस्यैव स्वप्रागभावध्वंसत्ववत् स्वध्वंसप्रागभावत्ववच्चाद्यतत्त्वज्ञानस्यैव मिथ्याज्ञानजन्यवासनाध्वंसत्वकल्पनसम्भवेन तद्धे
तुत्वेऽपि नातिरिक्तध्वंससिद्धिः। एवं प्रागभावेऽप्यधिकरणातिरिक्ते प्रमाणाभावः। उत्पत्तेः पूर्वं कपालादौ घटो नास्तीत्यादिप्र
तीतेः कपालाद्यधिकरणैरेवोपपत्तेः इहेदानीं घटप्रागभाव इत्यादिप्रत्ययस्य च स्ववासनामात्रकल्पितत्वेन तदसाधकत्वा
त् इहेदानीं घटो भविष्यतीत्यादिप्रत्ययस्य चोत्पत्स्यते भविष्यतीत्यनयोः समानविषयकत्वेन भविष्यत्कालीनोत्पत्तिमत्त्व
विषयकत्वात् अभावत्वं विनाशिवृत्ति पदार्थविभाजकोपाधित्वात् भावत्ववदित्यनुमानस्य च पूर्ववन्निरसनीयत्वे
न प्रागभावासाधकत्वात् नन्वेकस्माद्वह्निसंयोगाद्रूपरसादेरुत्पत्तौ कार्यभेदार्थं प्रागभावोऽङ्गीकार्यः तत्र समवायिकारणद्र
व्यासमवायिकारणवह्निसंयोगयोरभेदेन तद्भेदस्य कार्यभेदानिर्वाहकत्वादिति चेन्न तत्र वह्निसंयोगानां भेदकल्पनेन।

वर्त्तमानकालोत्तरकालोत्पत्तिको घट इति बोधः ४

तद्रूपासमवायिकारणाभेदेनैव रूपरसादिकार्यभेदनिर्वाहात् आवश्यकं च रूपादीनां परस्परं वैलक्षण्यप्रयोजकत-
यातद्भेदकल्पनम् अन्यथा सलक्षणानां बहूनां घटादीनां प्रागभावभेदेप्यवैलक्षण्येन प्रागभावभेदस्य वैलक्षण्याप्रयो-
जकतया रूपादीनां परस्परं वैलक्षण्यानुपपत्तेः वस्तुतस्तु रूपादिमति भाविरूपादिप्रागभावसत्त्वेन तदापत्तिवारणाय
रूपादौ रूपत्वादिना प्रतिबन्धकतानुपेत्य रूपत्वाद्यवच्छिन्नं प्रति रूपत्वाद्यवच्छिन्नाभावस्य रूपादिसामग्रीनाश्यशक्ति-
विशेषस्य वा कारणत्वमवश्यमिति तत एव रूपादीनां परस्परं वैलक्षण्यस्य भेदस्य च निर्वाहे न प्रागभावसिद्धिः यत्तु
घटत्रयादिविषयकापेक्षाबुद्धौ द्वयोः त्रिचतुरादिषु च द्वित्वस्य वारणाय प्रागभावोवश्यमङ्गीकार्यः न च द्वयोरपेक्षा-
बुद्ध्या द्वित्वं त्रयाणां तया त्रित्वं जन्यत इत्याद्यभ्युपगमान्निर्वाह इति वाच्यम् द्वित्वत्रित्वाद्युत्पत्तेः प्राक् द्वयोः त्रया-
णां भिन्नस्यैवासम्भवादिति मतं तन्न एकत्वादिसमकालमेव द्वित्वाद्युत्पत्तेरङ्गीकारेण द्वित्वादेरपेक्षाबुद्धि-
व्यङ्ग्यत्वमात्रस्याङ्गीकारात् अन्यथा सर्वत्र व्यञ्जकानां व्यङ्ग्यजनकत्वापत्त्या व्यञ्जकत्वोच्छेदापत्तेः । प्रतिपुरुष-
तत्तदपेक्षाबुद्धिजन्यानन्तद्वित्वादिव्यक्तीनां कल्पने महागौरवेण द्वित्वादेरपेक्षाबुद्धिव्यङ्ग्यतायां लाघवाच्च अस्तु
वा द्वित्वादेरपेक्षाबुद्धिजन्यत्वं तथापि न क्षतिः ॥ द्वित्वादीनामुपलक्षणानां तया द्वित्वादिकारणतावच्छेदकत्वोपग-

अ० मेनद्वित्वेद्व्येकत्वस्यत्रित्वादौत्र्येकत्वादेरसमवायिकारणत्वोपगमेनद्वित्वाद्युत्पत्तिनिर्वाहात् नचद्व्येकत्वस्येत्यादावे
२४ कत्वेगुणेकथंद्वित्वान्वय इतिवाच्यम् गुणेपिद्वित्वादेर्बुद्धिविशेषविषयत्वरूपस्यसर्वैरेवाङ्गीकारात् परेतु सह
स्रतन्तुकपटस्यतेष्वेवतन्तुषूत्पत्तिर्नान्यत्रेतिनिर्वाहायप्रागभावोवश्यमभ्युपेयः नचसमवायेनतत्पटोत्प
त्तौसहस्रतन्तूनांतत्तत्तन्तुत्वेनतादात्म्येन: तत्तत्संयोगव्यक्तीनांतत्तत्संयोगत्वेनसमवायेनवाहेतुतयानिभ
र्वाहइतिवाच्यम् सहस्रतन्तुकपटस्यसमवायेनसहस्रतन्तुष्वेवोत्पत्त्यातत्रकस्यापिसहस्रान्तर्गततन्तोस्ता
दात्म्येनप्रत्येकद्विमात्रनिष्ठानांतत्तत्संयोगानांचसमवायेनासत्त्वाद्व्यभिचारापत्तेः तस्मात्तत्पटंप्रतितत्पटप्रा
गभावस्सिद्धिरित्याहुः तदसत् तत्पटम्प्रतितावत्तन्तुनिष्ठसहस्रत्वसङ्ख्यायाः तादृशसङ्ख्याविशिष्टतन्तुत्वे
नवाकारणत्वेनैवानतिप्रसङ्गे नप्रागभावासिद्धेः॥ अत्रसहस्रतन्तुषुप्रत्येकं सहस्रतन्तुकपटस्यसमवायेनोत्प
त्त्यातत्रपर्याप्तिसम्बन्धेनसहस्रत्वसङ्ख्याया असत्त्वेनव्यभिचारापत्तिः समवायसम्बन्धेनप्रत्येकंतन्तुषुसहस्र
त्वसङ्ख्याङ्गीकारेतुसहस्रान्तःपातिद्वित्रियादितन्तुष्वपितादृशपटोत्पादापत्तिः तत्रोक्तसङ्ख्यायाः प्रागभाव

स्यापि च सत्त्वादिति चिन्तनीयम् अन्ये तु तत्त्वज्ञानीनामदृष्टोत्पत्तिवारणायानन्तानां मिथ्याज्ञानजन्यवासनानां हेतु
त्वापेक्षयाद्यतत्त्वज्ञानप्रागभावस्यैकस्य हेतुत्वकल्पने लाघवात् प्रागभावसिद्धिरेव प्रमकीत्याहुः तदप्यसत् मिथ्या
ज्ञानजन्य— तावच्छेदकजातिविशेषात्मकवासनात्वेनानुगतेनादृष्टं प्रति हेतुत्वेनैवोपपत्तेः सप्रतियोगिकप्रा
गभावकल्पने मानाभावात् वस्तुतो नैयायिकानां घटस्येव स्वध्वंसप्रागभावत्ववत् मिथ्याज्ञानजन्यवासनानामे
वाद्यतत्त्वज्ञानप्रागभावत्वकल्पनसम्भवेन तद्धेतुत्वेऽपि नातिरिक्तप्रागभावसिद्धिः न चैवमपि केवलनीलाद्युत्प
त्त्यारब्धे पटादौ चित्ररूपोत्पत्तिवारणाय चित्रत्वावच्छिन्नं प्रति नीलादिषडभावहेतुत्वापेक्षया चित्रप्रागभावस्यैकहेतुताकल्प
ने लाघवात्तत्सिद्धिरिति वाच्यम् चित्ररूपानङ्गीकारात् अव्याप्यवृत्तिनीलपीतादिसमूहादेव चित्रव्यवहारोपपादनात् नी
लादेः स्वभिन्नरूपाजनकत्वनियमाच्च न चाव्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वविरोध इति वाच्यम् अव्याप्यवृत्तीच्छाज्ञानादिजा
तीयस्यात्मसुखादिज्ञानादेरव्याप्यवृत्तित्वाद्विरोधासिद्धेरित्याहुः अत्र केचित् प्रागभावानुपगमे घटादिसामग्रीसत्त्वेनोत्पन्नस्या
द्वितीयघटस्य पुनरुत्पादापत्तिरतस्तत्सिद्धिः न च द्वितीयघटारम्भकविशिष्यतत्कपालद्वयसंयोगक्षणविशेषव्यक्तेस्तदानीमसत्त्वा
न्न तदापत्तिरिति वाच्यम् यतो हि न द्वितीयघटस्योत्पत्तिरापाद्यते येन तत्कपालसंयोगादिव्यक्त्यभावान्न तदापत्तिरिति शङ्कोत्ते व

अ॰ क्तुम् नापि पूर्वघटव्यक्तेरुत्पत्तिरापाद्यते येन तत्प्राक्क्षणाद्यभावान्न तदापत्तिरिति शक्यते वक्तुम् अपितु घटत्वावच्छिन्नोत्पत्ता
५५ त्तिरेवापाद्यते तत्कारणीभूतानां सामान्यतः कालकपालादीनां सर्वेषां सत्त्वात् न च तदङ्गीकारेपि स्वप्रतियोगिना तत्त्राशोपग
मे प्रतियोग्युत्पत्तिर्द्वितीयक्षणे प्रागभावासत्त्वेपि प्रथमक्षणे तत्सम्भवादुक्तापत्तिरशक्यपरिहारैवेति वाच्यम् प्रागभावस्य
स्वप्रतियोगिसामग्रीनाश्यत्वेन प्रतियोगितत्प्रागभावध्वंसयोर्युगपदुत्पत्त्यापत्त्यसम्भवादित्याहुस्तदसत् प्रागभावस्याधि
करणारूपत्वेप्युक्तापत्तेर्वारणात्तस्यातिरिक्तत्वासिद्धेः। महापटानन्तरं यत्र खण्डपटोत्पत्तिर्भविष्यति तत्र महापटसत्त्वद
शायामपि तत्प्रागभावादीनां सत्त्वेनोक्तापत्तेर्वारणीयत्वात् यदा तत्पटाद्युत्पत्तेर्नोत्पटाद्युत्पत्त्यभावस्य तत्पटादिध्वंसस्य वाधि
करणात्मकस्य हेतुत्वेप्येवं सकलापत्तिवारणासम्भवेन तस्याधिकरणारूपताप्यसिद्धेश्चेति॰ एवमत्यन्ताभावान्योन्याभा
वयोरप्यधिकरणातिरिक्तयोर्मानाभावः। भूतले घटो नास्ति घटो न पट इत्यादिप्रतीतीनामधिकरणात्मकाभावविषय
कत्वेनैव निर्वाहात् यत्तु उक्तं घटो नास्तीत्यादिप्रतीतीनामनन्ताधिकरणविषयकत्वे गौरवाल्लाघवेनातिरिक्तयोस्तयो
स्सिद्धिरिति तन्मन्दम् निरधिकरणकाभावप्रतीत्यभावेन यदधिकरणमन्तर्भाव्य यदभावप्रतीतिस्तस्यास्तदधिकरणा
त्मकतदभावविषयत्वोपगमे गौरवाभावात् न चेह घटो नास्तीत्यादिभ्रमस्थले प्रतीयमानघटाभावस्य घटवत्तदधिक

रणानात्मकत्वेना ——— धिकरणान्तरात्मकघटाभावविषयकत्वे विनिगमनाविरहेणानन्ताधिकरणविषयकत्वेन
गौरवं दुर्वारमिति वाच्यम् तत्र घटवत्तदधिकरणे घटाभावानात्मके सर्वसिद्धाधिकरणान्तरवृत्तित्वघटाभावत्वस्य मस्वीका
रेतस्मादभावचतुष्टयस्यापि नाधिकरणातिरिक्तत्वम् नचाभावस्याधिकरणात्मकत्वे ऽभेदेनाधाराधेयभावानुपपत्तिरि
ति वाच्यम् अभावाधिकरणकाभावस्यानतिरिक्तत्ववादिनस्तवापि घटाभावे घटो नास्तीत्यादौ प्रमेयत्वे प्रमेयत्व
मित्यादौ वाभेदेप्याधाराधेयभावस्य स्वीकृतेऽपि नतत्सम्भवात् यदि चैवं घटवत्यपि भूतले पटो नास्तीति प्रतीत्यापत्तिः तदधि
करणस्य घटाभावानात्मकत्वे तु घटानयनात्पूर्वं घटनयनोत्तरं च तत्प्रतीत्यनापत्तिः अधिकरणस्यैकत्वात् न च तदा
नीं घटवत्ताज्ञानसत्त्वेन तस्यैव प्रतिबन्धकत्तया नोक्तापत्तिः तादृशज्ञानासत्त्वे चेष्टापत्तिरिति वाच्यम् तादृशज्ञानासत्त्वे
जायमानायाः तादृशप्रतीतेर्विषयाबाधेन प्रमात्वापत्तेरिति विभाव्यते तदापि नक्षतिः अभावस्याधिकरणात्मकत्वपरित्य
ज्याधिकरणविषयकज्ञानविशेषात्मकत्वोपगमेन घटकालीनाधिकरणज्ञानस्य घटाभावानात्मकतया तत्कालीनाधि
करणज्ञानस्य घटाभावात्मकत्वेन चोक्तापत्त्यनापत्त्योरनवकाशात् एवं चाभावाधिकरणयोराधाराधेयभावो मोक्षस्य साध्य
त्वञ्चोपपद्यते नच ज्ञानविशेषस्याभावत्वे निर्जने देशे बन्धविच्छेदे तडागादिभ्यो जलनिः सरणं न स्यात् एवमन्य

अ कारेविचरन्करटकैर्नविध्येत· तत्रकस्याप्यधिकरणज्ञानाभावेनज्ञानविशेषात्मकजनाभाव बन्धविच्छेद नेजो
२६ ऽभावात्मकान्धकारणामसम्भवा——दितिवाच्यम् तत्रापिकीटादिजन्तूनामधिकरणज्ञानस्यतदानीमपि
सत्वेनोक्तदोषाभावात् वस्तुतस्तु तदधिकरणानन्त्कालसम्बन्धस्यैवाभावप्रतीतिव्यवहारनियामकत्वेनोपपत्तौ
नातिरिक्ताभावकल्पना· मानाभावात्· यथाह्येकेनैवभूतलादिना प्रतियोगि विशेषणं विशेष्य उद्देश्यइत्या
दिस्तत्तत्तद्व्यवहारस्तथाधिकरणकालविशेषसम्बन्धेनैवघटोनास्तिघटोनेत्यादिव्यवहारस्याप्युपपत्तेः।एवंचाधा
राधेयभावादिकमपिसुघटमेव· कालसम्बन्धस्याधिकरणेसत्वात्· साध्यत्वाच्चतथाचयत्राधिकरणेकदापिनप्रतियोगी·य
थाह्रदादौवह्न्यादिकं वाय्वादौरूपादिकंतत्रतदधिकरणंतस्यकालसम्बन्धोवातदभावः।अन्यत्रतुतदधिकरणकालवि
शेषसम्बन्धएवसः।एवंभेदेप्यूह्यम्। एवंघटादिपूर्वकालकपालादिसम्बन्धोघटादिप्रागभावः।उत्तरकालविशेषक
पालादिसम्बन्धश्चघटादिध्वंसइतिबोध्यम् नचाधिकरणादीनांनिष्प्रतियोगिकत्वादभावत्ववित्तिवेद्यत्वाभावाच्चस
प्रतियोगिकत्वादिनियतोऽभावोऽतिरिक्तोऽवश्यमभ्युपेयइतिवाच्यम् घटादेर्घटत्वादिनासप्रतियोगिकत्वाभावत्ववि
त्तिवेद्यत्वयोरभावेपिघटाभावाभावत्वादिनाप्रतीतौतदुभयसत्त्ववत्भूतलादेर्भूतलत्वादिनाप्रतीतौतदभावेपिघटा

भावत्वेन शुद्धेन तदङ्गीकारेणोपपन्नेः। इदन्त्वादिनाप्यभावप्रतीत्यनुरोधेन त्वयाप्येवंवाच्यत्वात् नचाभावस्यानतिरिक्तत्वे
ऽभावत्वेप्यनतिरिक्ते मानाभावइति वाच्यम् अतिरिक्ताभाववादिनापि तदनुगमाद्यर्थमभावत्वस्यातिरिक्तस्याङ्गीकारात्
घटोभावोनवेत्यादिसंशयप्रकोटितावच्छेदकत्वेनाभावत्वस्याखण्डस्यावश्यमुपेयत्वाच्च नचाभावस्याधिकरणादिरू
पत्वेहृदोवह्न्यभावइत्यादि प्रतीत्यापत्तिर्दुर्वारेति वाच्यम् अनतिरिक्ताभावाङ्गीकर्तृमतेप्यभावाधिकरणकाभावस्या
धिकरणरूपत्वाङ्गीकारेणपटाभावेघटोनास्तीत्यादिप्रतीतिवत्पटाभावोघटाभावइत्यादिप्रतीतेर्दुर्वारत्वात् इष्टा
पत्त्यादिसमाधानस्यममापिसुवचत्वात्· यत्तु अभावस्याधिकरणरूपत्वेजलादिरूप गन्धाभा वादेर्घ्राणेन्द्रियेण
प्रत्यक्षानुपपत्तिः। जलादेर्घ्राणेन्द्रियायोग्यत्वात्· ज्ञानरूपत्वेघटाद्यभावस्याचाक्षुषत्वानुपपत्तिः। ज्ञानस्याचाक्षुष-
त्वात्· कालसम्बन्धरूपत्वेघटाद्यभावस्यातीन्द्रियत्वापत्तिः। कालस्यातीन्द्रियत्वादितिमुक्तावलीकारैरुक्तं तन्नसत् जला
देर्जलत्वादिनाघ्राणाद्ययोग्यत्वेपिगन्धाभावत्वादिनातदुपगमेन· ज्ञानस्यज्ञानत्वेनचक्षुराद्ययोग्यत्वेपिघटाभावत्वा
दिनातदुपगमेन·कालस्यकालत्वेनातीन्द्रियत्वेपिघटाभावत्वादिनेन्द्रियकत्वस्योपगमेनास्माकंषडिन्द्रियवेद्यत्वोप
गमेनचदोषासंस्पर्शात् मानमनोहरकारास्तु चक्षुः चाक्षुषभावातिरिक्तग्राहकमिन्द्रियत्वात् घ्राणवदित्यनुमानेना

सप्रोषप्रत्वस्याङ्गीकारेऽपि प्रागभावादिसमये घटादेराश्रयस्यासत्त्वेन तत्प्रतियोगित्वस्य तत्रासम्भवेन भविष्यन्घटोऽतीतो
घट इत्यादिव्यवहारनिर्वाहो न स्यात् न च भविष्यत्त्वादेरतिरिक्तत्वेऽप्याश्रयासत्त्वात्कथं निर्वाह इति वाच्यम् तस्यात्ति
रिक्तस्याविद्यमानाश्रयकस्यैवाङ्गीकारात् न चाखण्डोपाधित्वे तेषां सप्रतियोगिकत्वासम्भवेन कुतश्चिदाद्यत्वं कु
तश्चिच्चरमत्वमित्यादिव्यवस्थानुपपत्तिरिति वाच्यम् यथा तारत्वमन्दत्वादेर्जातिविशेषस्यापि कस्यचित्कुतश्चित्ता
र इति कुतश्चिन्मन्द इति व्यवहारजनकतया सप्रतियोगिकत्वं यथा वा प्रकारत्वादेरखण्डस्यापि रक्तदण्डवानित्यादौ दण्डे
प्रकारतापेक्षया प्रकारत्वं रक्ते च तया विशेष्यत्वव्यवहारेण सप्रतियोगिकत्वं तथात्रापि सप्रतियोगिकत्वेन कस्यचित्का
लस्य कुतश्चिदाद्यत्वं कुतश्चिच्चरमत्वं कुतश्चिदतीतत्वमित्यादिव्यवस्थासम्भवादिति न चतुर्विधातिरिक्ताभावसिद्धि
रिति वदन्ति अत्रोच्यते भूतले घटो नास्तीत्याद्याकारकाया भूतलाद्यधिकरणकाभावप्रतीतेरपलपितुमशक्यतया तद्वि
षयोऽतिरिक्तोऽभावोऽवश्यमुपेयः अन्यथोक्तरीत्या भूतले घटोऽस्तीत्यादिप्रतीतीनामपि परमाणुपुञ्जज्ञानकालादिरूपा-
त्वाङ्गीकारादेवोपपत्त्या घटादिभावानामप्यसिद्धिप्रसङ्गः स्यात् परमाणुपुञ्जादेः परमाणुपुञ्जत्वेनातीन्द्रियत्वेऽपि घटत्वा
दिनेन्द्रिययोग्यत्वोपगमेन ज्ञानस्य ज्ञानत्वेनातीन्द्रियायोग्यत्वेऽपि घटत्वादिना तदुपगमेन कालादेः कालत्वादिनातीन्द्रि

अ· मत्वेपिघटत्वादिना तद्योग्यत्वोपगमेन चादोषात् परमाणुपुञ्जवादाद्यापत्तेः। एवमननुगताधिकरणादीनामभाव
२८ त्वकल्पनेन घटो नास्ति घटो न घटो नष्टो घटप्रागभाव इत्याद्यधिकरणविषयकशाब्दादिविषयत्वस्यानन्ताधिकरणेषु क
ल्पनेन महागौरवेणालाघवादतिरिक्ताभावसिद्धेश्च एवं प्रागभावादीनां क्रमाद्धेतुमूलकतापि· असदेव सोम्येदमग्र आसीत्· भू
यश्चान्ते विश्वमायानिवृत्तिः। नेह नानास्ति किञ्चिन् द्वेवाव ब्रह्मणो रूपे मूर्त्तञ्चामूर्त्तञ्च मर्त्यञ्चामर्त्यञ्चेत्यादिश्रुतीनां सत्त्वात्· एते
न ध्वंसश्चरमक्षणवर्त्तिकश्च न भावविकारश्चरमक्षणसम्बन्ध एव वा न त्वतिरिक्तः। उत्पत्तिव्यवहारस्याद्यक्षणसम्बन्धेनेव ध्वं
सव्यवहारस्यापि चरमक्षणसम्बन्धेनैवोपपत्तौ प्रतिपदार्थमनन्तध्वंसादिशक्तिकल्पने गौरवात्· प्रमाणाभावाच्च अत एव नि
रुक्ते ध्वंसो भावविकारेषु गणितः। जायतेऽस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यतीति षड्भावविकारा इति निरुक्ता
नुसारिणां मतमप्युपपन्नमुक्तरीत्या ध्वंसादेरतिरिक्तत्वस्यावश्यकत्वात्· एवं चाद्यत्वचरमत्वादिकं ध्वंसप्रागभावघटितं पूर्वोप
दर्शितसखण्डोपाधिरूपमेव न त्वखण्डोपाधिरूपं क्लृप्तेनैवोपपत्तावखण्डोपाधिरूपत्वे मानाभावात् न चाविद्यमानानां घटादी
नां कथमतीतत्वाद्याश्रयत्वं धर्मिणामभावादिति वाच्यम् अतीतघटादीनां ज्ञातो घट इत्यादिव्यवहारस्यत्पाभ्यां ज्ञानविषयताश्रयत्व
वदतीतादिव्यवहारस्याप्यतीतत्वादिधर्माश्रयत्वस्याप्यगत्यास्वीकारात् अथैवमपि प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ता

वदवतर्कनिर्णय वाद जल्प वितण्डा हेत्वाभास छल जातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति
गोतमसूत्रे· धर्मविशेषप्रसूताद् द्रव्य गुणकर्मसामान्यविशेष समवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञा
नान्निःश्रेयसमिति कणादसूत्रे चाविभजनान्नातिरिक्तोऽभावस्तत्सम्मत इति चेन्न तदभावध्वंसापवर्गे इत्यादिबहु
सुगोतमसूत्रेषु· क्रियागुणव्यपदेशाभावात्प्रागसदित्याद्यनेककाणादसूत्रेषु चाभावप्रणयनादेव तत्सम्मतिसूचना
त् अत्र तदभावः शरीरेन्द्रियादीनामभावः प्रागसत् घटादिकार्यस्योत्पत्तेः प्रागसदित्यर्थ इति संक्षेपः ० इति पूर्व
खण्डः एवं चोक्तातिरिक्ताभावस्य ज्ञानमिन्द्रियसन्निकर्षादिघटितप्रत्यक्षसामग्रीसत्त्वे प्रत्यक्षम् अनुमित्यादि
सामग्रीसत्त्वे चानुमित्यादिरूपं भवति तथाहि घटाभाववद्भूतलमित्यादाविन्द्रियं करणम् स्वसम्बद्धविशेषण
तालक्षणसन्निकर्षो व्यापारः अभावप्रत्यक्षं फलम् अत्र सम्बद्धघटकसम्बन्धश्चाभावग्राहकपञ्चविधसंयोगा
दिमध्येऽन्यतमो ग्राह्यः अन्यथा कालिके नेन्द्रियसम्बद्धव्यवहितघटादौ विशेषणतया पटाभावादेः प्रत्यक्षापत्तेः ए
वं च भूतलादौ घटाद्यभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणता। रूपादिगुणे सङ्ख्याद्यभावप्रत्यक्षे स्वसंयुक्तसमवे
तविशेषणता· रूपत्वादिसामान्ये सङ्ख्याद्यभावप्रत्यक्षे स्वसंयुक्त——समवेतसमवेतविशेषणता· श्रोत्रव

श्र त्ति शब्दाभावप्रत्यक्षे श्रोत्रावच्छिन्नविशेषणता। कादिशब्दे खाद्यभावप्रत्यक्षे स्वावच्छिन्नसमवेतविशेषणता। ए
२९ वमभावाधिकरणकाभावातिरिक्तमते भूतलवृत्तिघटाभावादौ पटाद्यभावप्रत्यक्षे स्वसंयुक्तविशेषणविशेषणता। क
काराभावादौ गकाराद्यभावप्रत्यक्षे श्रोत्रावच्छिन्नविशेषणविशेषणता। एवमन्यत्रापि फलानुरोधेनेन्द्रियसम्ब
द्धविशेषणतोह्या। एवमुक्तविधा विशेषणता यद्यपि नानाविधा तथापि संयोगव्यक्तिभेदेपि संयोगत्वेन संयोगव
त्विशेषणतात्वेनैकैव सा ज्ञेया अन्यथाभावाभावसाधारणप्रत्यक्षे षोढासन्निकर्ष इति प्राचाम्प्रवादो व्याहन्येत न
न्वेवं यावतां विशेषणतानां विशेषणतात्वेन यावतां संयोगव्यक्तीनां संयोगत्वेन विभागे संयुक्तसमवायादीनां चतु
र्णामपि समवायत्वेनानुगमसम्भवेन संयोगसमवायविशेषणताः त्रयः सन्निकर्षा इत्येवं कुतो नोक्तमिति चेन्न
षोढासन्निकर्ष इति शास्त्रकारीयपरिभाषाया अपर्य्यनुयोज्यत्वात्। तदनङ्गीकारे तु त्रिधः संसर्गविभाग इष्ट एवे
ति हृदयम्। अथ घटाभाववद्भूतलमित्यत्राभावस्योक्तविशेषणतावत्त्वेपीह भूतले घटो नास्तीत्यादिप्रतीतौ ए
तद्भूतलवृत्त्यभावप्रतियोगि घट इत्याकारकापन्नाभावे उक्तविशेषणतावत्त्वमिति चेत् अत्र केचित् नानार्थक
त्वे त्तोषावतीत्यादिपदवत्तात्पर्य्यवशाद्घटाभाववद्भूतलमित्यादिवाक्यस्य सङ्ग्रहायेन्द्रियसम्बद्धविशेषणाभि

ध्वेनपदानध्वेनरूपा श्रयः ष्याकुरुइनोरेशाद्याभावनीतिप्रकरणाहोधः १

त्वस्येन्द्रियसम्बद्धविशेषणमिति विग्रहः। भूतले घटो नास्तीत्यादिवाक्यस्य सङ्ग्रहाय चेन्द्रियसम्बद्धभूतलादिविशेष
णाय चेति विग्रहः तथा चाभावे सर्वत्रोक्तविशेषणतासत्त्वेन सन्निकर्षोपपत्तिरिति वदन्ति तन्न भूतले घटो नास्ति पटाभा
ववच्च भूतलमित्यादिसमूहालम्बने उभयसन्निकर्षभानानुपपत्तेः सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति व्युत्पत्ति।
विरोधात् अत्रार्थे न वृत्तिमत्त्वं तथा च सकृदन्यदस्यार्थे न देकदेशे वृत्तौ वा विशेषणत्वे भवतूक्तविरोधो गम्यार्थबोधवि।
शेषणत्वे तु न कोऽपि विरोध इति ध्येयम् अन्ये तु घटाभाववद्भूतलमित्यादौ स्वसम्बद्धविशेषणता भूतले घटो नास्तीत्यादौ
च स्वसम्बद्धविशेष्यता सन्निकर्षः न चैवं लौकिकविषयतानियामकानां सन्निकर्षाणां षोढात्वपरिभाषानुपप
त्तिरिति वाच्यम् अन्यथानुपपत्त्येष्टत्वात् न चोभयरूपेण तयोरभावप्रत्यक्षहेतुत्वे परस्परव्यभिचारात् कार्यकार
णभावद्वयापत्तिरिति वाच्यम् एकरूपान्यतरत्वेनैव सन्निकर्षत्वाभ्युपगमादित्याहुः तन्न लघ्वनतिप्रसक्तान्यत
रत्वस्य दुर्वचत्वात् न हि तावदुभयान्यान्यत्वमन्यतरत्वम् व्यासज्यवृत्त्युभयत्वावच्छिन्नभेदस्य प्रत्येकेऽपि स
त्त्वेन केवलान्वयितया तदवच्छिन्नभेदरूपस्य तस्याप्रसिद्धेः नापि प्रत्येकान्यान्यत्वं तत् तादृशविशेषणतान्यान्य
त्वस्येन्द्रियसम्बद्धविशेष्यत्वे तादृशविशेष्यतान्यान्यत्वस्य चेन्द्रियसम्बद्धविशेषणत्वे सत्त्वेन तयोरेकरूपेण

उक्तविधविशेषणतात्वविशेष्यतात्वोभयरूपेण ५

अ सन्निकर्षतानुपपत्तेः यद्विचाभावीयविशेषणताघटितसामानाधिकरण्यसम्बन्धेन घटादिभेदविशिष्टपटादिभेदाव
३० च्छिन्नप्रतियोगिताकभेदवत्त्वमनुगताननिप्रसक्तरूपं घटपटाद्योरन्यतरत्वमित्युच्यते तदाप्यन्यतरत्वघटकभेदयोः
परस्परविशेषणविशेष्यभावे विनिगमनाविरहेणोभयरूपान्यतरत्वप्रसक्त्या एकरूपेण सन्निकर्षतानुपपत्तेस्तादवस्थ्यात्
अत्र सार्वभौमाचार्यास्तु इह भूतले घटो नास्तीत्यादिवाक्ये न प्रत्यक्षविषयमात्रं भूतलादिकं प्रदर्शितं न तु प्रतीतिस्वरूप
म् प्रतीतिस्तु सर्वत्राभावप्रकारा घटाभाववद्भूतलमित्याकारा आहेति न दोषः वस्तुतस्तु ज्ञासन्निकर्षघटिका विशेषणता
नज्ञानीयप्रकारतादिरूपा किन्त्वभावस्य वृत्तितानियामकः स्वरूपसम्बन्धविशेषः स च भूतलप्रकारकेऽभावप्रकारके वा बो
धेऽभावस्य भूतलवृत्तितानियामक एक एव नहि भूतलं घटवत् भूतलवृत्तिर्घट इति ज्ञानयोः सम्बन्धभेदो विषयः किं
तु प्रकारताविशेष्यतयोर्भेदस्तद्वत्रापि तथा चात्र विशेषणपदमाधेयपरं विशेष्यपदमाधारपरमित्यङ्गीकारात् स
मवायाभावयोः प्रत्यक्षे स्वसम्बद्धाधारनिरूपिताधेयतालक्षणसन्निकर्षसिद्धिरिति प्राहुः अधिकमग्रे वक्ष्यते ननूक्त
विशेषणतासन्निकर्षेणाभावप्रत्यक्षोपगमेऽपि भूतलादौ घटादिज्ञाने जाते घटाभावादिकं कथं न ज्ञायत इति चेन्न घट
देः प्रमारूपज्ञानदशायामभावप्रत्यक्षासम्भवात् घटसत्त्व एव तत्प्रमासम्भवेन तदानीमभावे विशेषणतासन्निकर्षस्ये

वासम्भवात् नचैवमपिभूतलादौघटादिभ्रमेजातेतत्रघटाभावादिकंज्ञायतामा अधिकरणेसंयोगस्याभावविशेषणता
रूपस्यचसन्निकर्षस्यसम्भवादितिवाच्यम्घटादिभ्रमजनकदोषस्यप्रतिबन्धक त्वकल्पनात् नचघटादिभ्रमस्यै
वप्रतिबन्धकत्वमस्तुलाघवादितिवाच्यम् भ्रमस्यस्वोत्पत्तेः प्रागसम्भवेनघटादिभ्रमकालएवतदभावप्रत्यक्षापत्ते
रवारणात् यदिचदोषस्यप्रतिबन्धकत्वेपितत्रविनश्यदवस्थापन्नदोषाद्घटादिभ्रमस्यत्रभ्रमानन्तरंतदभावप्रत्यक्षा
पत्तिरित्युच्यतेनदासत्वभावप्रत्यक्षेप्रतियोग्युपलम्भस्यापिप्रतिबन्धकत्वंतदभावरूपस्यानुपलब्धेश्चेन्द्रियसहकारि
तयाहेतुत्वम् नचैवंयद्यत्रघटःस्यात्तर्ह्युपलभ्येतेत्याहार्यभ्रमसत्त्वेतदभावप्रत्यक्षानुपपत्तिरितिवाच्यम् अनाहा
र्यभ्रमत्वेनप्रतिबन्धकत्वकल्पनात् तथाचात्रतदधिकरणनिष्ठतदिन्द्रियजन्यतत्सम्बन्धावच्छिन्नतदभावप्रत्य
क्षंप्रतितदधिकरणकतदिन्द्रियजन्यानाहार्याप्रामाण्यज्ञानानास्कन्दिततत्संसर्गकतत्प्रकारकोपलम्भाभावःकार
णमित्यनुपलब्धिनिष्कर्षः अत्रकार्यतावच्छेदकसम्बन्धःलौकिकविषयता कारणतावच्छेदकसम्बन्धः स्वा
भावीयविशेषणता अधिकरणेतत्सद्रूपम् यदधिकरणविषयकाभावप्रत्यक्षंजननीयंतत्परम् अभावप्रकार
योस्तत्सद्रूपंचपटस्यपटादेरभावप्रत्यक्षंसाधनीयंतत्परम् एवंचभूतलादिविशेष्यकपटादिप्रकारकोपलम्भदशा

अ यामपिजलादिविशेष्यकपटाद्यभावप्रत्यक्षानुपपत्तिवारणायाधिकरणेनत्यदद्वयम्· इन्द्रियान्तरजन्येऽनुमानिकेच पटा
२१ द्युपलम्भेसत्यपितदभावप्रत्यक्षात्तदिन्द्रियजन्येति· यद्यत्रपटःस्यात्तर्ह्युपलभ्येतेत्याकाराभावप्रत्यक्षहेतुप्रतियो
ग्यारोपसत्त्वेप्यभावप्रत्यक्षादनाहार्येतिअप्रामाण्यज्ञानास्कन्दितपटवद्भूतलमितिज्ञानेसत्यपितदभावप्रत्यक्षा
दप्रामाण्यज्ञानानास्कन्दितेतिचोपलम्भविशेषणम्· संयोगेनभूतलंपटवदित्युपलम्भेसत्यपिसमवायेनतदभाववद्भूतल
मितिप्रत्यक्षोदयात्तत्संसर्गकेत्यपि तद्विशेषणम्· भूतलम्पटवदित्युपलम्भेसत्यपिभूतलंघटाभाववदितिप्रत्यक्षात्त
त्प्रकारकेत्युपलम्भविशेषणम्० तल्लक्षणंचज्ञानाकरणकाभावानुभवासाधारणकारणत्वरूपम्· अनुमानजन्यातीं
न्द्रियाभावानुभवकारणेऽनुमानादावतिव्याप्तिवारणायज्ञानाकरणकेतिपदम्अभावानुभवकरणे चक्षुरादावति
व्याप्तिवारणायाभावेति· अभावस्मृत्यसाधारणहेतुसंस्कारेऽतिव्याप्तिवारणायानुभवेति —— साधारणेकालाद
वतिव्याप्तिवारणायासाधारणेति ज्ञानाकरणकाभावानुभवमात्रवृत्तितद्धर्मत्वेनेतिव्याप्तिवारणायकारणेतिअखा
ल ण्डोपाधिर्वानुपलब्धित्वम्अत्रोक्तानुपलब्धौयोग्यताप्यपेक्षिता तेनवक्ष्यमाणायोग्यतायटितानुपलब्ध्यभावेननायो
ग्येजलपरमाणवादौपृथिवीत्वाभावादेर्योग्येस्तम्भादौपिशाचाभावादेश्चप्रत्यक्षम्· एवंचेदृश्यनुपलब्धिसहका

कारेणचक्षुषाभूतलादौघटतद्धर्मरूपादीनामभावोगृह्यते· त्वचाघटतद्धर्मस्पर्शादीनामभावोगृह्यते· एवंरसनया
रसतद्धर्मादीनामभावः· घ्राणेनगन्धगन्धत्वादीनामभावः· श्रोत्रेणशब्दशब्दत्वादीनामभावः· मनसासुखसुख
त्वादीनामभावः· इदानीमहंसुखरहितः सुखत्वरहितंदुःखमित्याद्यनुभवसिद्धोगृह्यतइति अथकेयंयोग्यानुपल
ब्धिर्यदभावाज्जलपरमाणवादौनपृथिवीत्वाद्यभावप्रत्यक्षम् किंयोग्यस्यप्रतियोगिनोनुपलब्धिः योग्येधिक
रणेप्रतियोगिनोनुपलब्धिर्वायोग्यानुपलब्धिर्वेद्यावाप्रत्यक्षयोग्यावा नाद्यः जलपरमाणवादौपृथिवीत्वाद्यभा
वप्रत्यक्षत्वापत्तेः नद्वितीयः भूतलादौपिशाचाद्यभावप्रत्यक्षत्वापत्तेः नतृतीयः अनुपलब्धेःस्ववेद्यत्वेआत्माश्रयापत्तेः
अनुपलब्ध्यन्तरवेद्यत्वेअन्योन्याश्रयचक्रकानवस्थापत्तेः नापितुरीयः अयमुपलम्भाभावइत्याकारप्रत्यक्षस्यस्वे
ष्यनुपलब्धिघटितसामग्रीतोऽभावप्रत्यक्षदर्शनात् अज्ञातानुपलब्धेरेवप्रतिबन्धकाभावतयाऽभावग्राहकत्वा
दितिचेत्· अत्रगङ्गेशोपाध्यायाः यत्रयस्यसत्त्वमनुपलब्धिविरोधितत्रतस्याभावोयोग्यानुपलब्ध्यर्थः ।अस्या
र्थः यस्याभावप्रतियोगिनोघटादेः ।सत्त्वम्आश्रयत्वम् ।यत्र· अधिकरणे ।अनुपलब्धिविरोधिघटादिरूपप्र
तियोगिसत्त्वोपलम्भविषयत्वाभावप्रतियोगिनः प्रतियोग्युपलम्भविषयत्वस्यप्रसञ्जकमित्यर्थः प्रसक्तिरापत्तिः ।यत्रे

अ०
३२ तिसम्बन्धार्थविषयकत्वस्यविरोधिपदार्थघटकायत्तावन्वयः। नत्रेत्यनन्तरंप्रतियोगिनोऽनुपलब्धेरितिनस्याभावइत्यनन्त
रंचगृह्यतइतीतिपूरणीयम्॰ योग्यानुपलब्ध्यर्थइत्यस्ययोग्यानुपलब्ध्याऽभावोगृह्यतइत्यर्थः। एवंचयत्राधिक
रणोपदार्थदेशः प्रतियोगिसत्त्ववान्स्यात्तदाप्रतियोगिसत्त्वप्रकारकोपलम्भविषयत्ववान्स्यादित्यापत्तिः सम्भ
वतितत्राधिकरणेप्रतियोग्यनुपलब्ध्याप्रतियोग्यभावोगृह्यतइतिसमुदितार्थः अनेनचानुपलब्धेरुक्तापत्तियोग्ये
योयोग्यप्रतियोगिप्रकारकयोग्याधिकरणविशेष्यकोपलम्भस्तत्प्रतियोगिकत्वरूपापारिभाषिकीयोग्यतासूचिता॰
योग्याचासावनुपलब्धिश्चेतिसमासः। भूतलादौचक्षुरादिघटितसामग्र्यन्तरसत्त्वेआपादनंविनापिघटोनास्तीत्या
दिप्रतीतेरनुभवसिद्धतयाविषयत्वंविहाययोग्यतानिवेशः। अत्रभूतलादिविशेष्यकपिशाचोपलम्भस्यजलपरमाण्वा
दिविशेष्यकपृथिवीत्वोपलम्भस्यचयोग्यप्रकारकत्वयोग्यविशेष्यकत्वविरहेणैवभूतलेपिशाचाद्यभावस्यतादृश
जलेपृथिवीत्वाद्यभावस्यचाप्रत्यक्षत्वोपपादनंसम्भवतीतिनोक्तापत्तिलेशोपीति अथोपलम्भेनतदापत्तियोग्यत्वंच
प्रतियोगिसत्त्वनिष्ठव्याप्तिनिरूपकत्वम्॰ तच्चनसम्भवति॰ घटादिसत्त्वेप्यालोकसंयोगाद्यभावेघटाद्युपलम्भानुदयात् न
चव्याप्यभावेपिकाक्षतिरितिवाच्यम् आपाद्यापादकव्याप्तिमूलकतर्कस्यैवार्थसाधकत्वेनव्याप्यभावेशिथिलमूल

तथानैनोपयोगसिद्धेः यदि च प्रतियोगिसत्त्वातिरिक्तप्रतियोग्युपलम्भककारणकूटविशिष्टप्रतियोगिसत्त्वव्यापकतोपल
लम्भे विवक्षितेत्युच्यते तदा तथाविधचैत्रमैत्रीयनानाचक्षुःसंयोगत्वकत्वसंयोगादिव्यक्तीनामेकत्रासम्भवेन तादृश
प्रतियोगिसत्त्वं न तत्राप्रसिद्धिः यदि तु पृथिवीत्ववान्घटद्वित्वादिर्यत्किञ्चिदनुभवनिष्ठकार्यतानिरूपितकारणताव
च्छेदकाः यावन्तो रूपत्वमहत्त्वत्वादयः प्रतियोगिसत्त्वातिरिक्तास्तावद्धर्माणां प्रत्येकाश्रयविशिष्टप्रतियोगिस
त्त्वव्यापकतोपलम्भे विवक्षितेत्युच्यते तदा परमाणावाद्याविन्नरावि प्रोवि न पृथिवीत्वाद्यापत्त्यसम्भवेऽप्युक्तविषयावत्का
रणमहत्त्वादिविशिष्टपृथिवीत्वादिकं यद्यत्र स्यात्तदोपलभ्येतेत्याद्यापादनसम्भवेन स्थूलजलादाविव जलपरमाण्वादौ
पृथिवीत्वाद्यभावप्रत्यक्षापत्तिवारणमशक्यमेवेति चेन्न यदधिकरणविषयकाभावप्रत्यक्षं तदधिकरणवृत्तिधर्मान
वच्छिन्नत्वे सत्युक्तविधकारणकूटविशिष्टप्रतियोगिसत्त्वनिष्ठव्याप्तिनिरूपकत्वस्योपलम्भे विवक्षितत्वात् तथा च
तदधिकरणपदेन जलपरमाणूपादाने जलपरमाणुवृत्तिमहत्त्वरूपधर्मानवच्छिन्नत्वोक्तकारणकूटानां प्रतिमहत्त्वा
वच्छिन्नत्वयोर्वि-- रोधितया तदुभयावच्छिन्नप्रतियोगिसत्त्वाप्रसिद्ध्या तन्निष्ठव्याप्तिनिरूपकोपलम्भाप्रसिद्ध्या च
तदभावरूपानुप-- लब्धिविरहादेव न परमाणावपि पृथिवीत्वाद्यभावप्रत्यक्षापत्तिरिति चिन्तामणिकारास्वदनि

पत्रयत्रोक्तविधस्यादिकारणकूटविशिष्टसम्भवद्वृत्तित्वं तत्त्वोपलम्भइतिव्याप्तिः १ स्यादिना पिशाचभेदादि

अ तम्भ उक्तयोग्यानुपलब्धेरभावग्राहकत्वे पिशाचादेरसम्भत्वाद्यभावप्रत्यक्षतापत्तेः पिशाचो यदि चक्षुरादिसन्निकृष्टत्वे

५५ वृत्तिसम्भत्ववान्स्यात्तदा तत्त्वेनोपलभ्येत सम्भवदित्यादिरीत्या तत्राप्यापादनसम्भवात् पिशाचत्वप्रकारतानिरूपित

लौकिकविशेष्यत्वाप्रसिद्ध्यात्तद्घटितयोग्यानुपलम्भाभावात्तत्र भेपिशाचत्वाद्यभावप्रत्यक्षानुपपत्तेश्चेतिय

त्तु योग्यपदाद्यभावप्रत्यक्षएव मणिकारोक्तयोग्यानुपलब्धेर्हेतुत्वम् अयोग्यपिशाचत्वाद्यभावप्रत्यक्षेतु त

दधिकरणनिष्ठलौकिकविशेष्यतानिरूपिताभावनिष्ठप्रकार — तानिरूपितप्रतियोगिकत्वसम्बन्धावच्छिन्न

प्रकारतावत्त्वसम्बन्धेनायोग्यपिशाचत्वाद्यभावप्रत्यक्षे तदधिकरणीयत्वप्रसञ्जनप्रसञ्जितप्रतियोगिक

सदधिकरणीयत्वोपलम्भस्य विषयतासम्बन्धावच्छिन्नाभाव एव पिशाचत्वादिप्रतियोगिवृत्तिर्हेतुः अत्रोभ

यत्र तत्पदं यदधिकरणेऽभावप्रत्यक्षंजननीयं तत्परम् प्रत्यक्षाकारश्च पिशाचत्वाभाववान्स्तम्भइति आपाद्याकारस्तु

पिशाचत्वयदि स्तम्भवृत्तिः स्यात्तर्हि स्तम्भवृत्तित्वेनोपलभ्येत स्तम्भत्वादिवदिति पूर्वोक्तानुपलब्ध्याव भावाधिकरण

निष्ठकार्यकारणभावः अत्रत्वभावप्रतियोगिपिशाचत्वादिनिष्ठ इतिविवेकः अयमनुपलब्धापादनस्य सर्वत्रास

म्भवेनोपलम्भस्य तदधिकरणीयत्वापत्तियोग्यत्वं तदधिकरणीयत्वनिष्ठव्याप्तिनिरूपकत्वं यावद्यम् तत्रोक्तविध

तत्स्तम्भत्वस्य योग्यत्वादियमनुपलब्धिस्त्वयोग्याभावप्रत्यक्षेऽङ्गीकृतेऽन्यत आह मनस्त्वेति ४

कारणकूटविशिष्टजातित्वविशिष्टस्तम्भयोग्यवृत्तिधर्मानवच्छिन्नत्वविशिष्टतदधिकरणीयत्वनिष्ठव्याप्तिनिरू
पकत्वं बोध्यम् एवं च समानाधिकरणसम्बन्धेनोक्तकूटादिविशिष्टस्य स्तम्भवृत्तित्वस्योपलम्भव्याप्यत्वान्न स्त
म्भेऽतीन्द्रियपिशाचत्वाद्यभावप्रत्यक्षानुपपत्तिः। जातित्वादिविशिष्टस्य पिशाचवृत्तित्वस्योपलम्भाव्याप्यत्वाच्च
न पिशाचे स्तम्भत्वमनेनेत्यादिजात्यभावप्रत्यक्षापत्तिः। उपलम्भाभाववति पिशाचे स्तम्भवृत्तित्वस्य सत्त्वाद्व्यभिचारवा
रणाय जातित्वविशिष्टेति वृत्तित्वविशेषणम्। जातित्वविशिष्टस्तम्भवृत्तित्वप्रकारकोपलम्भस्य स्तम्भत्वादौ प्र
सिद्धस्य पिशाचेऽभावात् पिशाचरहिते स्तम्भत्वात्यन्ताभावप्रत्यक्षवारणाय प्रतियोग्यवृत्तीत्यादि। तथा च पिशा
चादिप्रतियोग्यवृत्तिजातित्वादिधर्मानवच्छिन्नत्वाभावान्न दोषः। न चायोग्यपिशाचत्वाद्यभावप्रत्यक्षानुरोधेन
त्वभायास्तदधिकरणीयत्वेत्याद्यनुपलब्धेरेव योग्यघटाद्यभावप्रत्यक्षेऽपि हेतुतास्तु किं पूर्वोक्तयोग्यानुपलम्भस्य हेतु
तयेति वाच्यम् परमाण्वादौ महत्त्वाद्यभावप्रत्यक्षानुपपत्तेः उक्तरीत्या परमाणुवृत्तित्वप्रकारकोपलम्भस्य महत्त्वाद्य
वृत्तिजातित्वानवच्छिन्नत्वस्य चाप्रसिद्धत्वात् एवं च घटे आत्मत्वाद्यभावश्चाक्षुषः। स्पर्शे रूपत्वाद्यभावस्त्वाचः। र
से गन्धत्वाद्यभावो रासनः। गन्धे शब्दत्वाद्यभावो घ्राणजः। शब्दे सुखत्वाद्यभावः श्रावणः। सुखे गुरुत्वत्वाद्यभा

श्रा वोमानसः प्रत्यक्षणावासमवायेनात्मत्वंयद्दिघटवृत्तिः स्यात्तदा तत्त्वेनोपलभ्येत घटत्वादिवत् यत्तु घटवृत्तित्व
२४ प्रकारकोपलम्भवत्तत्त्व घटवृत्तित्ववत् यथा पटत्वमित्येवं तत्र तत्रापादयितुमशक्यत्वादिति तन्न दिन्द्रियायोग्यपिशा
चत्वाद्यभावप्रत्यक्षवादिमतेतन्नसम्यक् · लम्भेपिशाचभेदप्रत्यक्षानुपपत्तेः तादात्म्येनपिशाचोयदिस्तम्भीयः
स्यात्तदा तत्त्वेनोपलभ्येतस्तम्भवदित्यापादयितुंशक्यत्वेपिपिशाचावृत्तिजातित्वानवच्छिन्नत्वाभावात् · उक्तजात्य
भावप्रत्यक्षोपपादनेपसिद्धान्तापत्तेश्चतन्नदिन्द्रियायोग्यात्मत्वाद्यभावप्रत्यक्षस्य दीधितिकाराद्यनभिमतत्वात् · भवताचो
क्तंतर्के --- सहकृतात्प्रत्यक्षात्मादिभेदस्तत्रात्मत्वाद्यत्यन्ताभाववृत्तिप्रसिद्धमात्रिस्मरणबलादेव घटआत्मत्वाभाव
वानित्याद्यावनुमितावेवप्रत्यक्षत्वभ्रमोदयात् · अगृहीतमात्रिकस्यात्मघटाभेदभ्रमवत्त्वतश्चत्वाद्दृशप्रत्यक्षानुदया
त् · एवंवह्निवृत्तितृणादिजन्यतावच्छेदकजातीनामप्रत्यक्षतयाजातित्वादिविशेषवह्निवृत्तित्वस्योपलम्भाभाप्यत्वे
नोक्तमूलव्याप्तेरसम्भवाच्च · भवतावह्नौपिशाचत्वाद्यभावप्रत्यक्षाङ्गीकारेणजातित्वाविशिष्टवह्न्यन्यवृत्तित्वस्यानि
वेशयितुमशक्यत्वात् एवंजन्यत्वेहादिजनकतावच्छेदकेपरमाणवृत्तिजलत्वादिजातौजन्यजलादिजनकतावच्छे
दकपरमाणुसाधारणजलत्वादि --------

जातिभेदस्य प्रत्यक्षापत्तेः जन्यजलजनकतावच्छेदकजलत्वं यदि तादात्म्येन जन्यस्नेहजनकतावच्छेदकजलत्वस्यान्तदा
तत्त्वेनोपलभ्येतेत्यापादयितुं शक्यत्वात् अत एव अथैवं रीत्या परमाणुव्यावृत्तं द्व्यणुकादौ जलत्वमेकं परमाणुसाधारणं द्वि
तीयमिति जलत्वयोर्भेदे भेदाग्रहः कुत इति चेत् समनियतयोग्यव्यक्तिवृत्तित्वादिति मुक्तावलीप्रकाशकाराणां प्रति
बन्धकताकल्पनापि सङ्गच्छते उक्तभेदप्रत्यक्षानङ्गीकारात् न चैवं तत्प्रतिबन्धकस्यैव सत्त्वात् तदभावघटितकारणकूट
विशिष्टत्वदधिकरणीयत्वाप्रसिद्ध्या नोक्तापत्तिरिति वाच्यम् स्नेहजनकतावच्छेदकजातिमत्त्वन्यावयविनि कुम्भीयजले ज
लजनकतावच्छेदकजात्यसत्त्वादुक्तसमनियतवृत्तित्वसमाधानस्याविचारितरमणीयत्वात् न च जातित्वादिपदेन योग्य
तापि गृह्यते तथा च तृणादिजन्यतावच्छेदकजातीनामयोग्यतया न व्याप्तिभङ्ग इति वाच्यम् तथा सति भवदाशयानुपप
त्तेः पिशाचत्वादेरप्ययोग्यतया तस्य स्तम्भवृत्तित्वेऽपि तत्त्वेनोपलम्भासम्भवेन पिशाचत्वाद्यभावप्रत्यक्षस्यैवासम्भवा
त् अयोग्यत्वं स्वप्रत्यक्षसामग्रीसत्त्वे तादात्म्येन प्रतिबन्धकत्वम् तच्च तादृशजातीनामेव कल्प्यत इति न तासु व्या
प्तिभङ्गः । पिशाचत्वं तु न प्रत्यक्षप्रतिबन्धकं तस्यायोग्यत्वेऽप्ययोग्यपिशाचवृत्तित्वेनैवाप्रत्यक्षत्वापादनसम्भवादिति चे
न्न उक्तरीत्या स्वप्रत्यक्षे तादात्म्येन कारणत्वस्यैव योग्यतापदार्थतया तद्घटकपिशाचत्वादिप्रकारकप्रत्यक्षस्याप्र

दिस्वरूपम्· उक्तरीत्याघटत्वस्यातीन्द्रियघटितत्वेन तत्स्वरूपस्यापि तथात्वेन तदवच्छिन्नाभावप्रत्यक्षानुपपत्तेः नापि तस्यातिरिक्त
त्वंप्रक्रम्· उक्तरूपघटत्वस्यातीन्द्रियत्वेन तत्त्वह्नाखण्डोपाधेरप्यतीन्द्रियतयोक्तदोषापत्तेः अतिरिक्तस्यापियोग्यघटेतन्नियमेऽपिवयो
ग्यत्वदर्शनात् यदि च सर्वेषां घटत्वं तद्वृत्तिजातित्वादिधर्माणां योग्याखण्डोपाधिताकल्पनेन तदा नियतसंप्रयोगशादिसख
ण्डपदार्थोपपादकशास्त्रविरुद्धतया बहुसिद्धान्तव्याकुलता· घटत्वाद्यभावस्य प्रत्यक्षोपपादनाय घटत्वादेर्योग्योपाधिताक
ल्पनेन तत्तदभावस्यापि योग्यप्रतियोगितया तत्तदुपाधीनां कल्पनया अनवस्थास्यात्· भवतु चेकेनानन्तानिपतनपदार्थवादिनये
न घटत्वादियोग्याभाव एष ऽह· ननु पिशाचत्वाद्ययोग्याभावेः सर्वमेतेन वेति॰ एवमेव बहुषु पुस्तकेषु तु क्रमः अत्र विस्तरभिया
नोच्यते तथा च यत्र घटत्वाद्यभावप्रत्यक्षानवसरः कुतस्तत्र पिशाचत्वाद्ययोग्याभावप्रत्यक्षावसर इति सूक्ष्मदर्शिपरामर्शः
पुनरत्र तत्त्वम्· अत्र तथाविधतदधिकरणीयत्वनिष्ठव्याप्तिनिरूपकत्वमुपलम्भस्य प्रमेयत्वादिसामान्यरूपेणोपलम्भत्वेन
वा विशेषरूपेण तद्व्यक्तित्वेन वा विवक्षितम्· नाद्यः प्रतियोग्युपल — म्भे प्रमेयत्वादिना व्याप्तिनिरूपकतायाः सर्वत्रैव सम्भ
वात् तदधिकरणीयत्वे व्यभिचारवारकविशेषणादाने वैयर्थ्यापत्तेः न द्वितीयः उपलम्भत्वेनेश्वरोपलम्भस्य विषयतया केवला-
न्वयित्वेनोक्तदोषापत्तेः तदभावरूपानुपलब्धेरसिद्धेश्च तन्त्रीयः भवदाशानुपपत्तेः तथाहि चैत्रस्य घटवद्भूतलमिति ज्ञा

श्री नसत्त्वेपिचक्षुःपटवद्भूतलमिति ज्ञानेपिभूतलंघटाभाववदितिमेचक्षुषाज्ञानंजायतइत्याद्युपपन्नं यद्यादृशाभावबुद्धौयादृशप्र
२६ तियोग्युपलम्भाद्यद्यदिन्द्रियजन्यायद्यदधिकरणविशेष्यकायद्यत्प्रतियोगिप्रकारकाः प्रतिबन्धकत्वेनप्रसिद्धाः तत्तदिन्द्रि
यजन्यतत्तदधिकरणविशेष्यकतत्तत्प्रतियोगिप्रकारकोपलम्भत्वेनतथाविधतदधिकरणीयत्वनिष्ठव्याप्तिनिरूपकता
विवक्षणीया तथाचतत्तच्चक्षुरादीन्द्रियविषयभेदेनतत्तदभावचाक्षुषत्वाद्यवच्छिन्नंप्रतितत्तत्प्रतियोगिचाक्षुषाद्य
भावत्वेनविशिष्यैवानुपलब्धेर्हेतुतासिद्धा नचैवमिन्द्रियान्तरजन्योपलम्भसत्त्वेपीन्द्रियान्तरेणाभावप्रत्यक्षापत्तिरिति
वाच्यमिष्टत्वात् लौकिकसन्निकर्षजन्यबुद्धौसामान्येन्द्रियजन्यविरोधिनिश्चयस्यैवप्रतिबन्धकत्वात्· एवंचपिशा
चत्वादिप्रकारकलौकिकचाक्षुषत्वाद्यप्रसिद्ध्यातद्घटितानुपलब्धेरप्यसिद्धत्वान्नस्तम्भादावयोग्यपिशाचत्वा
द्यभावप्रत्यक्षोपपत्तिरिति केचित्तु जातियोग्यव्यक्त्योरन्यतरप्रतियोगिकत्वमभावमात्रस्यसाक्षात्कारेयोग्यत्वम्· व्यक्तौ
योग्यत्वंचलौकिकविषयतावत्त्वम् तथाचनस्तम्भेपिशाचत्वंनास्ति· स्पर्शोरूपत्वंनास्तीत्यादिनतत्तदिन्द्रियायोग्य
जात्यभावप्रत्यक्षानुपपत्तिः नाप्ययोग्यपिशाचाद्यन्योन्याभावप्रत्यक्षापत्तिः नचजलपरमाण्वादिषुपृथिवीत्वा
द्यभावस्यान्धकारेघटाद्यभावस्यचप्रत्यक्षापत्तिरितिवाच्यम्प्रकृष्टमहत्त्वोद्भूतरूपावच्छिन्नालोकसंयोगावच्छि

चक्षुषा२ त्वचा२

नेन्द्रियसंयुक्तविशेषणतापरवाभावग्राहकत्वेनाङ्गीकारात् यदि तु घटवद्भूतलमित्यादिप्रत्यक्षसत्त्वेपि घटाभाववद्भू
तलमित्यादिप्रत्यक्षापत्तिः न च लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानस्यैवालौकिकबाधबुद्धिप्रतिबध्यतया तत्रालौ
किकसन्निकर्षजन्याभावप्रत्यक्षस्येष्टापत्तिरिति वाच्यम् अव्याप्यवृत्तिप्रतियोग्यभावयोरेकाधिकरणे एव प्रत्यक्षे लौकिकसन्निकर्षेण
प्रतियोगिप्रमोत्तरक्षणे तत्रैव लौकिकसन्निकर्षेणाभावस्यापि प्रत्यक्षापत्तिरित्युक्तौ मतेन दोषस्तु बाधमुद्रयोपलम्भाभावत्वेन
हेतुत्वेनेति किमुक्तगुरुतरयोग्यानुपलब्धिहेतुत्वस्य कारणात् ये तु वदन्ति तन्न तृणादिजन्यतावच्छेदकवह्नित्वमिति वैजा
त्यात्यन्ताभावस्य जन्यत्वेऽपि हजनकतावच्छेदकजलत्वाद्युक्तभेदस्य च प्रत्यक्षापत्तेः स्तम्भे भवदभिमतपिशाचभेदप्र
त्यक्षानुपपत्तेश्च अत्र वहवस्तु संसर्गाभावे योग्यत्वं योग्यमात्रप्रतियोगिकत्वे सति योग्यधर्ममात्रावच्छिन्नप्रतियो
गिताकत्वम् अयोग्यगुरुत्वाद्यभावप्रत्यक्षवारणाय सत्यन्तम् संयोगेन इह भूतले द्रव्यं नास्तीति द्रव्यसामान्याभाव
प्रत्यक्षवारणाय मात्रेति गुरुत्वावच्छिन्नघटनिष्ठप्रतियोगिताकात्यन्ताभावस्यात्र गुरुत्ववान्नास्तीति प्रत्यक्षस्य
वारणाय विशेष्यदलम् उद्भूतरूपगुरुत्वान्यतरावच्छिन्नाभावस्य प्रत्यक्षवारणाय विशेष्यदले मात्रेति वस्तुत उ
द्भूतरूपवान्नास्तीति प्रतीतिस्तत्रैवोक्तान्यतरवान्नास्तीति प्रतीतेर्लाघवाच्च उद्भूतरूपमात्रस्यैव तादृशप्रतियोगितावच्छे

पिशाचत्वाद्यत्यन्ताभावप्रत्यक्षवादिनये पिशाचभेदप्रत्यक्षाङ्गीकारात् ६

अ· एकत्वोचितम् मात्रपदप्रयोजनंतु स्वाव च्छिन्नाभावप्रत्यक्षवारणमेव· उद्भूतानुद्भूतरूपयोर्योग्यायोग्ययोर्द्वयोरेवघटाभा
२७ वप्रतियोगितावच्छेदकत्वात्प्रत्यक्षमितिमन्तव्यम्· परमाणवादौतद्व्यक्तित्वेनएषि वीतायभा वप्रत्यक्षवारणान्नूलमह
त्त्वाद्यवच्छिन्नेन्द्रिय ---- सन्निकर्षाभावात् अन्योन्याभावेयोग्यतातु जात्यवच्छिन्नप्रतियोगिताकत्वगास्वन्ययो।
ग्यधर्ममात्रावच्छिन्नप्रतियोगिताकत्वान्यतररूपैव· तेनस्तम्भेपिशाचाद्यन्योन्याभावपिशाचवदन्योन्याभावयोः प्रत्य
क्षत्वाप्रत्यक्षत्वोपपत्तिः। मात्रपदेनचनपिशाच घटोभयवदन्योन्याभावप्रत्यक्षापत्तिः। एतन्मतेयोग्यत्वेनानुपलब्धि
विशेषणंकिंतुप्रत्यक्षसंसर्गाभावान्योन्याभावयोः। अत्रैवमुक्तावलीकाराणांसंसर्गाभावप्रत्यक्षेप्रतियोगिनोयोग्यतान्यो
न्याभावप्रत्यक्षेधिकरणयोग्यतापेक्षितेतिवदतांनिर्भरोत्पन्नते एवंचप्रतियोग्युपलम्भाभावसचवेनतत्तदिन्द्रियेण
योग्यानामेवाभावानांप्रत्यक्षंनतुतत्तच्चक्षुराद्ययोग्यानामपीत्यङ्गीकुर्वन्ति तदस्मनोरमम्· अभावेसमवायेनजाति
त्वावच्छिन्नंनास्ति· आत्मनिप्रतियोगितयाध्वंसत्वावच्छिन्नंनास्तीत्याद्यनन्तसंसर्गाभावानामनन्तद्व्यणुकध्वंसाद्ययोग्य
साधारणप्रतियोगिकत्वेनप्रत्यक्षानुपपत्तेः अत एव प्रतियोगितावच्छेदकविशिष्टस्यैवयस्यकस्यचित्प्रतियोगिनोयोग्यत्वम
त्यन्ताभावग्रहेतन्त्रंनतुयोग्यमात्रप्रतियोगिकत्वम् अन्यथागुणेपिसंयोगसामान्याभावस्यतादृशप्रत्यक्षंनस्यादित्यादिजगदीशे
त्य२

नतुविस्वनायादिना प्रतियोग्यनुयोगिनोर्योग्यतोक्ताकथमत्रतद्विरुद्धाभावेयोग्यताक्ष्मत आह अत्रेति॥

क्तिरपि संगच्छते न च योग्यमात्रप्रतियोगिकत्वानभ्युपगमात् ननूक्ताभावेऽयोग्यजातिशङ्कया नाभावे जातिर्नास्तीत्यादिरूपसामा
न्याभावप्रत्यक्षमिति चेन्न यत्र यत्रायोग्यजातिस्तत्र योग्या यातीति व्याप्तेर्योग्यजातीनामपि कल्पनापत्तेः एवं सर्वत्र काचिदतीन्द्रिय
परत्वादिजातिशङ्कया घटे पटत्वं नास्तीति भवदनुभवसिद्धप्रत्यक्षस्याप्यपलापापत्तेः आत्मन्यप्ययोग्यध्वंसशङ्कया तदापत्तेश्च
सम्भवात् एवं न ह्रद्वो तृणाफूत्कारसंयोग मणितरणिकिरणसंयोगारणिनिर्मन्थनादिजन्यतावच्छेदकनानाजात्यवच्छिन्ना
न्योन्याभावस्य योग्येजन्यत्वेह जनकतावच्छेदके जलत्वादिजातौ जन्यजलजनकतावच्छेदकजलत्वादिजात्यन्योन्याभावस्य
च प्रत्यक्षापत्तेरवारणात् जलत्वजातेर्योग्यतया तद्व्यक्तिप्रतियोगितावच्छेदकतद्व्यक्तित्वात्मकजातित्वस्यापि योग्यधर्मत्वात् ए
तेन सत्त्वादौ पिशाचत्वाद्यत्यन्ताभावस्यापि पिशाचादिभेदसमनियततया तदभिन्नत्वात् उक्तान्योन्याभावयोग्यतायास्तत्र सत्त्वा
न्न तदभावप्रत्यक्षानुपपत्तिः यदि च समनियताभावानां मतेनैकमते पिशाचत्वाद्यभावप्रत्यक्षानुपपत्तिरिति विभाव्यते तदास्तु पि
शाचत्वं नास्तीति प्रतीतावपि पिशाचादिभेद एव विषयः मणिकारमतेऽभेदस्याव्याप्यवृत्तित्वान्मूले महीरुहो न विहङ्गम
संयोगीति प्रतीतेर्विहङ्गमसंयोगात्यन्ताभावविषयकत्ववदिति न योग्यधिकरणे तत्तदिन्द्रियायोग्यजात्यभावप्रत्यक्षानुप
त्तिरित्यपि निरस्तम् उक्तरीत्याऽभावग्राहकयोग्यतायाश्च निर्वचनात् पिशाचत्वाद्यत्यन्ताभावप्रत्यक्षानिर्वाहाच्च इदं पुनरिहा

पिशाचत्वाद्यत्यन्ताभाव ४    भेदस्यापि २

अ वधेयम्· केयंनामयोग्यता———नत्तावज्ज्ञानिरूपेतिशक्यतेवक्तुम्· अभावादृत्तित्वप्रसङ्गात् नापिप्रत्यक्षप्रयोजकोपाधिरूपा·स
१८ प्रातिरिक्तपदार्थस्यसिद्धान्तेनुपगमात् नचाभावरूपैवसेतिवाच्यम् कस्याभावरूपासेत्यादिविपक्षस्तथाप्यनुद्धारादित्यप्रत्याप्रति
बन्धकत्वाभावस्यैवयोग्यतारूपत्वंवक्तव्यम् प्रतिबन्धकत्वंचात्रविषयतासम्बन्धेनस्वप्रत्यक्षंप्रतितादात्म्यसम्बन्धेनाजनक
त्वम्· येषांपिशाचादीनांसामग्रीसत्त्वेपिनप्रत्यक्षंतेषांस्वप्रत्यक्षे· योग्यत्वंयेषांचघटादीनांनैवंतेषांयोग्यत्वमितियावत्·
तथाचप्रतिबन्धकत्वाभावाश्रयस्ययोग्यस्यकार्यमात्रेसाधारणकारणत्वेनक्लृप्तस्यनपृथक्कारणत्वविचारावकाशः वस्तु
तोविषयतयालौकिकप्रत्यक्षत्वावच्छिन्नंप्रतितादात्म्येनविषयत्वावच्छिन्नस्यनिमित्तकारणत्वरूपयोग्यत्वंप्रत्यक्षरूपफ
लानुरोधात्पटतदभावादीनामेवकल्प्यते नतुगुरुत्वतदभावादीनामितिनपृथग्विचारावकाशः·एवंघटाभाववद्भूतलमित्या
द्यभावप्रत्यक्षेबाधमुद्रयाघटवद्भूतलमित्यादिप्रत्यक्षस्यप्रतिबन्धकत्वेपितदभावरूपानुपलब्धेरपिनपृथक्कारणताविचा
रावसरः·अत्रप्रतिबन्धकत्वंतु तादात्म्यातिरिक्तसम्बन्धावच्छिन्नकारणताश्रयीभूतात्यन्ताभावप्रतियोगित्वरूपमपटा
द्यत्यन्ताभावप्रत्यक्षेपटादेः प्रतिबन्धकत्वापत्तिवारणायतादात्म्यातिरिक्तसम्बन्धावच्छिन्नेतिकारणताविशेषणम्
विषयस्यचपटाभावादेः स्वप्रत्यक्षेतादात्म्यावच्छिन्नकारणतावत्त्वान्नदोषः·पटादेः·प्रतिबन्धकत्वंतुनेष्टंनत्वस्येतद

अभावाघटितयोग्यताभाह॰

भावरूपविषयस्यैवासत्त्वात्प्रत्यक्षत्वोपपत्तेः। दाहादिकार्यं प्रति वह्न्यभावाभाववह्निस्वरूपकारणमादाय तत्प्रतियोगिनि
वह्न्यभावे प्रतिबन्धकत्वापत्तिवारणाय भावइतिपदम्· अत्रापि कारणाभावे प्रतिबन्धकताव्यवहाराभावात्कारणसत्त्वे का
र्यानुत्पत्तिप्रयोजकस्यैव प्रतिबन्धकत्वेन व्यवह्रियमाणत्वान्नेष्टापत्तिसम्भवः। घटादिप्रागभावमादाय तस्मिन्स्वप्रतिबन्ध
कत्वापत्तिवारणायात्यन्तेतिपदम्· प्रागभावानङ्गीकर्तृमते तु न देयमेव· यत्तु वह्न्यभावाभावस्याप्यत्यन्ताभावरूपतयोक्तापत्ति
त्तिवारणासम्भवइति तद्वारणाय भावभिन्नत्वमप्यत्यन्ताभावविशेषणमिति मतं तन्न वह्न्यादेर्नित्यत्वाभावेन नित्य
त्वे सति संसर्गाभावत्वरूपात्यन्ताभावत्वस्यैवासत्त्वात्· भावव्यावृत्तानुयोगिताविशेषरूपस्याखण्डोपाधिरूपस्य
वाऽभावत्वस्याप्यसत्त्वाच्च यत्तूक्तापत्तिवारणाय तादात्म्येत्यादिस्थाने दैशिकविशेषणतासम्बन्धावच्छिन्नत्व
मेव कारणताविशेषणमस्तु तथा च वह्न्यादिभावानां दैशिकविशेषणतासम्बन्धेनाकारणत्वादेव तद्वारणमिति
मतं तन्न स्वसंयुक्तविशेषणतादिरूपदैशिकविशेषणतया तथाविधचक्षुरादिभावानामपि कारणत्वेनोक्तापत्त्यवार
णात् ननु प्रतिबन्धकमण्यादिसत्त्वेऽप्युत्तेजकमण्यादिसहकृतसामग्रीसत्त्वे दाहादिकार्य्योदयात्कथं मण्यादेः सामग्री
सत्त्वेपि कार्यानुत्पादप्रयोजकत्वरूपप्रतिबन्धकत्वसम्भवइति चेन्न केवलमण्यादीनाम प्रतिबन्धकत्वेप्युत्तेजका

अ० भावविशिष्टानामेवतेषांप्रतिबन्धकतयातद्विशिष्टप्रतिबन्धकाभावस्यैवकार्य्यमात्रेहेतुत्वात्· अत्रसूर्य्यमणौषध्यादि
३९ द्रव्याणांदैशिकविशेषणतयोत्तेजकत्वंचन्द्रमणौषध्यादिद्रव्याणांदैशिकविशेषणतयाप्रतिबन्धकत्वंचबोध्यंननुसंयो
गेनतथात्वंसंयोगस्याव्याप्यवृत्तितयातेनतदधिकरणेपितदभावसम्भवेनातिप्रसङ्गापत्तेः। उत्तेजकत्वंच प्रतिबन्ध
कतावच्छेदकीभूताभावप्रतियोगित्वम्· एवंचोत्तेजकतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकोत्तेजकाभाववि
शिष्टानांप्रतिबन्धकानांमुक्तप्रतिबन्धकतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वेनकार्य्यमात्रेहेतुतेति।
फलितम्· एवंयत्रमन्त्रादीनामुत्तेजकत्वप्रतिबन्धकत्वंचोद्देश्यतयाबोध्यम्· शेषंदर्शितदिशावसेयम्· एवंघटाभा
ववद्भूतलमित्यादिप्रत्यक्षेघटवद्भूतलमित्यादिप्रत्यक्षस्यप्रतिबन्धकत्वम्· इदंज्ञानमप्रमेत्यादिज्ञानस्योत्तेजकत्व
त्वविषयतासम्बन्धेनविषयनिष्ठंसमवायेनात्मनिष्ठंवाबोध्यम्· शेषंपूर्ववत्· तथाचयत्रप्रतिबन्धकंनास्तितत्रोत्तेजक
स्यसत्त्वेउभयाभावप्रयुक्तस्यासत्त्वेविशिष्टाभावमात्रप्रयुक्तस्योक्तविशिष्टाभावस्यसत्त्वात्· यत्रचोत्तेजकमस्तितत्रप्रति
बन्धकस्यसत्त्वेविशेषणाभावमात्रप्रयुक्तस्यासत्त्वेतूभयाभावप्रयुक्तस्यविशिष्टाभावस्यसत्त्वाच्चनकार्यानुपपत्तिः। य
त्रप्रतिबन्धकमस्त्युत्तेजकंचनास्तितत्रोक्तविशिष्टाभावरूपकारणाभावान्नकार्योत्पत्तिरित्येवमनुपलब्धेः लक्षणप्रतिब

न्धकाभाववत्त्वेवाभावप्रत्यक्षेहेतुत्वमितिसिद्धम्॰ यथाचास्याः प्रतिबन्धकाभाववत्तयापिनहेतुतान्यापविद्धिरङ्गीकृतातथैव
अव्यक्तिभविष्यति॰ प्रभाकरास्तु कार्यानुकूलधर्मविघटकत्वंप्रतिबन्धकत्वम्॰ तच्चमणिमन्त्रादीनांवह्न्यादिनिष्ठदाह
दिकार्यानुकूलशक्तिरूपधर्मविनाशकतया॰ व्यभिचारादिहेत्वाभासज्ञानानामनुमित्यनुकूलपरामर्शादिनिष्ठशक्तिवि
नाशकतया॰ घटवद्भूतलमित्यादिरूपप्रतियोग्युपलम्भानांघटाभाववद्भूतलमित्यादिप्रत्यक्षानुकूलचक्षुःसन्निकर्षादि
घटितसामग्रीनिष्ठशक्तिनाशकतयाचनिर्वहतीतिप्रतियोग्युपलम्भस्यप्रतिबन्धकत्वेपितदभावरूपानुपलब्धेःप्र
तिबन्धकाभावतयापिहेतुतासम्भवतीतिवदन्ति तत्र साक्षात्कार्यविघटकबाधज्ञानस्यानुमितिप्रतिबन्धकत्वाभावाप
त्तेः तथाहियत्रपरामर्शानन्तरंलौकिकप्रत्यक्षरूपोबाधनिश्चयस्तत्रबाधनिश्चयोत्पत्तिद्वितीयक्षणेपरामर्शनिष्ठशक्ति
नाशोवक्तव्यः एवंचबाधोत्पत्तितृतीयक्षणेबाधेनानुमितिप्रतिबन्धोवाच्यः सचनसम्भवति तत्पूर्वम्परामर्शाभावादेवानु
मित्यनुत्पादसम्भवात्॰ बाधद्वितीयक्षणेनुमित्यापत्तेश्च॰ तत्पूर्वंशक्तिविशिष्टपरामर्शसत्त्वात्॰ उक्तविधयोत्तेजकाभावविशिष्ट
प्रतिबन्धकाभावेनैवसामञ्जस्येनतच्छक्तितत्प्रागभावध्वंसादिकल्पनागौरवाच्च अथमन्मतेकार्यत्वावच्छिन्नंप्रतितत्तद्व्यक्तिका
रणानामेकशक्तिमत्त्वेनहेतुतयानन्तव्यक्तिप्रतिबन्धकाभावानामहेतुतयाचातिलाघवम्॰ भवन्मतेत्वनन्तकारणानामन

श्रा न्नवह्नित्वादिरूपेणहेतुताकल्पनेगौरवमितिचेन्नकारणतावच्छेदकशक्त्यवच्छिन्नयावत्कारणसत्वेकार्योत्पत्त्यङ्गी-
४७ कारेविरुद्धवह्निजलादिकारणानामेकत्रमेलनासम्भवेनकार्यमात्रस्यैवविलयप्रसङ्गात्· तादृशशक्त्यवच्छिन्नकिञ्चि
त्कारणसत्वेकार्योत्पत्त्यङ्गीकारेतुघटादिकारणकलापात्पटाद्युत्पादापत्तेः नचघटत्वावच्छिन्नेपृथक्शक्तिमत्वेनका
रणतापटत्वावच्छिन्नेपृथक्शक्तिमत्वेनकारणतेत्यादिरीत्याकार्यतावच्छेदकसमसङ्ख्याकशक्तिकल्पनेपिनोक्त
दोषद्वयावकाशः एवमपिमन्मतएकैककार्यतावच्छेदकधर्मावच्छिन्ननिरूपितैकैककारणतावच्छेदकशक्तिकल्प
नेपिभवदभिमतैकघटत्वावच्छिन्ननिरूपितानेककारणतावच्छेदकदण्डत्वचक्रत्वादिकल्पनापेक्षयालाघवमस्ती
तिवाच्यम् एकत्रभूतभाविघटीययावत्कारणसत्वेघटोत्पत्त्यसम्भवेनतादृशशक्त्यवच्छिन्नकिञ्चिन्नीलकपालादि
कारणसत्वेपीतघटाद्युत्पत्त्यापत्तिसम्भवेनचोक्तदोषद्वयानुद्धारात् नचन्यायनयेप्युक्तदोषापत्तिः· तादृशकारणतावच्छे
दककपालत्वाद्यवच्छिन्नानांयावत्कपालादीनामपिमेलनासम्भवादितिवाच्यम् घटत्वादितत्तत्कार्यतावच्छेदकध
र्मावच्छिन्ननिरूपितकारणतावच्छेदककपालत्वादीनियावन्तितावद्धर्माश्रयतत्तद्व्यक्तिसत्वस्यैवकार्योत्पत्तिप्रयोज
कत्वात्· एवंशक्तेरप्युत्पादविनाशशालित्वेनकार्यरूपतयातांप्रत्यपिवह्न्यादिकारणानांशक्तिमत्वेनहेतुत्वंवाच्यमेवंतां

वक्ष्यमाणनवीनमतमुख्याचार्याद्यभिमतयोग्यताखण्डनायैतन्मतमाह ॥

तां शक्तिं मन्यपि शक्तिमत्त्वेनैव हेतुनयानवस्थापत्तेरित्यन्यत्र विस्तरः। उदयनाचार्यास्तु पापिनस्तु अभावप्रत्यक्षे योग्यानुपलब्धिर्योग्यतासहितानुपलब्धिः कारणम्। तत्र योग्यता च प्रतियोगितत्सन्निकर्षभिन्नप्रतियोगिग्राहकयावत्कारणसत्त्वम्। तत्तदिन्द्रियजन्यज्ञानीयतत्तत्प्रतियोगिप्रकारतानिरूपिततत्तदधिकरणनिष्ठलौकिकविषयताप्रयोजकसामग्रीसत्त्वमिति यावत्। परमाण्वादौ महत्त्वादिरूपस्य महत्त्वाद्युपलम्भकस्य महत्त्वादिग्राहकसन्निकर्षस्य चाभावेन कार

द्वा।५ णकूटविशिष्टानुपलब्धेरप्रसिध्या महत्त्वाद्यभावप्रत्यक्षानुपपत्तेरतः प्रतियोगितद्ग्राहकसन्निकर्षभिन्नत्वं निवेशः। जलपरमाण्वादौ पिशाचादौ च प्रतियोग्युपलम्भकमहत्त्वोद्भूतरूपाद्यभावान्न प्रतियोगिग्राहकसकलहेतुसमवधानमिति न तत्र पृथिवीत्वाद्यभावस्तम्भत्वाद्यभावप्रत्यक्षापत्तिः। एवं च वायावुद्भूतरूपाभावः परमाणौ महत्त्वाभावश्चाक्षुषः। गगने स्पर्शाभावः स्पार्शनः। गुडे तिक्ताभावो रासनः। जले गन्धाभावो घ्राणजः। आकाशे शब्दाभावः श्रावणः। कालादौ सुखाद्यभावो मानसः सम्भवति न तु तदधिकरणे तत्पदीदं स्यात्तदोपलम्पेतेत्यापादयितुं शक्यत्वात्। नन्वेवमपि पिशाचत्वादेरती—न्द्रियतयोक्ततदुपलम्भाप्रसिध्या स्तम्भादौ तदभावग्रहानुपपत्तिर्निरुक्तयोग्यानुपलब्धेरभावादिति वाच्यम्। अतीन्द्रियप्रतियोगिकाभावानां प्रत्यक्षतानुपगमादिति वदन्ति। अत्र यदन्तस्सन्निकर्षत्वानिरुक्तयावद्दृष्टचाक्षुषा

नतु स्वभिन्नात्मनि सुखादिप्रत्यक्षकारणापत्त्यान्मतं तन्निमत्यहेत्वानुयोगिकमनःसंयोगस्यैवि सुखमित्यहेतुतया कथं कालादौ प्रत्यक्षापादनमितन्नात्मार्थकादिपदं ज्ञेयम्॥

संसर्गाभावमात्रस्य प्रतियोगिमत्त्वेनायोग्यत्वेनिमुक्तावलीवचनस्य वैवनात्पर्यमत्र अधिकरणस्यायोग्यत्वात्॥

वक्ष्यमाणायोग्यतानुपलब्धौ विशेष्यविशेषणाभावे विनिगमनाविरहेण गुरुभूतकारणताद्यापत्तेश्चेतिप

अ· दिकारणासत्त्वं योग्यत्वमिति वदतो गौरीकान्तसार्वभौमस्य मते· विषयविषयाविनाभूतव्यतिरिक्तोपलब्धिकारणास
४९ म्पत्तिर्योग्यतेति वदतो भट्टपादस्य मते चानुपलब्धौ सामग्रीसत्त्वमेव योग्यत्वमिति मन्तव्यम्· नवीनास्तूक्तरीत्या योग्या
नुपलब्धेरपि नाभावप्रत्यक्षे हेतुः तथा सति प्रतियोगितत्सन्निकर्षव्यतिरिक्तस्य ककाराद्यभिव्यञ्जकविजातीयवायुसं
योगस्य ककाराद्यभावप्रत्यक्षकालेऽसत्त्वात्तद्घटितकारणकूटात्मकयोग्यत्वाप्रसिद्ध्या तत्सहितानुपलब्ध्या ककाराद्य
भावप्रत्यक्षानिर्वाहात्· किन्तु योग्यानुपलब्धिरित्यत्र योग्यपदस्य भावप्रधाननिर्देशतया योग्यतानुपलब्धिश्चेत्यर्थो
वसेयः सा च योग्यता भावग्राहकसन्निकर्षविषयेच्चापेक्षिता तथा च दण्डचक्रादिन्यायेनाभावप्रत्यक्षे योग्यतावत्स-
न्निकर्ष योग्यतावद्विषयकेवलानुपलब्धीनां त्रयाणां स्वातन्त्र्येण हेतुता ज्ञेया· सन्निकर्षयोग्यता च· महत्त्वाभावरूपा
भावेतराभाववाञ्चाक्षुषचक्षुःसन्निकृष्टमहत्त्वोद्भूतरूपवद्विशेषणाना· महत्त्वाभाववाञ्चाक्षुषमहत्त्वाघटिता· उद्भूतरूपा
भाववाञ्चाक्षुषरूपाघटितैव ग्राह्या· एवं महत्त्वाभावस्पर्शाभावेतराभावस्पार्शनेत्वक्सन्निकृष्टप्रकृष्टमहत्त्वोद्भूतस्पर्श
वद्विशेषणाना· प्रकृष्टमहत्त्वाभाववत्स्पार्शनेमहत्त्वाघटिता· उद्भूतस्पर्शाभाववत्स्पार्शने स्पर्शाघटिता बोध्या· एवं गन्धा
द्यभावघ्राणजादौ घ्राणादिसन्निकृष्टमहत्त्ववद्विशेषणाना· शब्दाभावप्रत्यक्षे तु इन्द्रियविशेषणतेत्यादिकावक्तनये

या· विषयेयोग्यता च लौकिकविषयतावत्स्वरूपा नचैवंयोग्यतायाअननुगमइतिवाच्यमनात्मघटत्वात् अनुपलब्धिश्च तत्त
दिन्द्रियजन्यतत्तदधिकरणविशिष्टावगाहितत्तद्धर्मावच्छिन्नाभावलौकिकप्रत्यक्षेतत्तदिन्द्रियजन्यतत्तदधिकरणविशेष्य
कतत्तद्धर्मावच्छिन्नलौकिकप्रत्यक्षाभावरूपा·नेनन जलपरमाण्वादौपृथिवीत्वाद्यभावप्रत्यक्षमनचचक्षुःसन्निकर्षमह
त्त्वोद्भूतरूपवद्विशेषणतात्मकयोग्यसन्निकर्षाभावादेवजलपरमाण्वादौपृथिवीत्वाद्यभावप्रत्यक्षवारणासम्भवेनिरुक्ता
नुपलब्धेरभावप्रत्यक्षहेतुत्वेमानाभावइतिवाच्यम् यत्रस्थूलजलादावेपिचक्षुःसंयोगोविद्यते तत्रपृथिवीत्वाभावेनाद्
श्रयोग्यसन्निकर्षस्यापिसत्त्वेनोपनीतजलपरमाण्वादिविशेषणकस्यजलपरमाणौपृथिवीत्वन्नास्तीत्याकारकप्रत्यक्ष
स्यापत्तिवारणायघटवद्भूतलमित्यादिज्ञानसत्त्वेपिघटाभाववद्भूतलमित्यादिप्रत्यक्षापत्तिवारणायश्चतद्धेतुतायाआवश्य
कत्वादितिवदन्तिसौत्रान्तिकास्तुअयंघटइत्यादिसंवेदनगतोविषयाकारप्रतिविम्बःतथाविधविम्बपुरःसरःप्रतिविम्बत्वात्
दर्पणादिगतमुखादिप्रतिविम्बवदितिनित्यानुमेयाःसर्वेपिविषयाःसन्तीत्यनुपलब्धिसहकारेणाभावप्रत्यक्षकथनन्तयु
क्तमित्याहुः तन्न घटमहम्पश्यामीतिविषयापरोक्षत्वस्यानुभवसिद्धत्वात् उक्तलिङ्गाद्यप्रतिसन्धानेपिघटाद्यनुभवदर्शना
च्च किञ्चघटादिविषयमात्रस्यननित्यानुमेयत्वम् तथासत्यन्वयव्यतिरेकावगतज्ञानहेतुभावयोरिन्द्रियतत्सन्निकर्षयोर्वै

अ० पर्य्यप्रसङ्गात्वन्मते व्याप्तिज्ञानादेरप्यनुमितिरूपत्वेन तत्रानुपपत्तेश्च॥ तस्मात्सिद्धं घटादिविषयाणामपरोक्षत्वमिति॥ अत्र भट्टाः
४२ योग्यानुपलब्धिकरणकमर्थाभावज्ञानमनुपलब्धिप्रमाणम्॥ तथाहि तन्नदभावाकारवृत्तिज्ञानं मुख्यं प्रमाणम्॥ तज्जनकत्वा
दनुपलब्धौ तु औपचारिकः प्रमाणत्वव्यवहारः। ज्ञानात्मकप्रमाणस्य फलं चाभावगतज्ञाततारूपं प्राकट्यं मयात्र घटाभावो
ज्ञात इति प्रत्यक्षसिद्धम्॥ एवं प्रत्यक्षादिप्रमाणेपि अयं घट इत्यादिविषयाकारवृत्तिज्ञानं मुख्यं प्रमाणम्॥ घटादिप्राकट्यं
फलम्॥ एवमग्रेपि॥ इन्द्रियव्याप्त्यादौ तु औपचारिकः प्रमाणत्वव्यवहारस्तज्जनकत्वात्॥ शाब्दानुमानिकाभावज्ञानव्यवच्छेदा
यानुपलब्धिकरणकमित्युक्तम्॥ अयोग्यस्य पिशाचादेरनुपलब्धिमात्रान्नह्यभावज्ञानवारणाय योग्यपदम्॥ अत्र वन्ध्यापुत्रो
नास्तीत्याकारविकल्पवृत्तौ प्रमाणत्वशङ्कानिरासायाभावेऽर्थेति विशेषणम्॥ प्रतियोगिना सम्बन्धेनार्थे विशिष्ट इति याव
त्॥ विकल्पवृत्तिस्तु नार्थविशिष्टा॥ योगशास्त्रकारैः शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति तल्लक्षणप्रणयनात् करण
त्वं चात्र फलायोगव्यवच्छिन्नत्वे सति कारणत्वलक्षणं बोध्यम्॥ अस्य चाभावप्रमादिरूपफलस्यायोगः कारणोत्रा
न्मादौ योगस्य सम्बन्धस्य प्रागभावः यद्वा योगेन्यत्राशोध्य च कल्पना ह्ययोगाश्रय प्रमादिरूपफलस्यैव प्रागभावो ग्राह्यः। त
स्यव्यवच्छेदः फलसम्पादनद्वारा पयानुपलब्ध्या तन्नयानुपलब्ध्यादिरित्यर्थः॥ एवं चानुपलम्भस्यावान्तरव्यापार

भावेन तद्बुद्धितत्करणत्वासम्भवेपि न क्षतिः न च भूतले घटो नास्तीत्यत्र न प्र॰ त्यक्षप्रमाणाभावेति वाच्यम् इन्द्रियसन्निक
र्षाजन्यत्वात् नह्यभावेनेन्द्रियसन्निकर्षः संयोगः समवायो वा सम्भवति तयोर्भावधर्मत्वात् नापि विषयविशेषणभावः अभावे
न्द्रियोः स्वविषयत्वानभ्युपगमात् नापि कालिकः एकदेशस्थस्याप्यभावस्य प्रत्यक्षापत्तेः तत्सत्त्वात् नापि विशेषणविशे
ष्यभावः तस्यापि मूलभूतसम्बन्धगर्भतया तन्निवृत्तौ निवृत्तेः तथाहि मूलमूलसंयोगेन समवायेन वा सम्बद्धयोर्हि दण्डदेवदत्तयोः
पटशौक्ल्ययोर्वा विशेषणविशेष्यभावो दृष्टः न ह्येवमिन्द्रियाभावयोः सम्बन्धो दृष्टचर इति अत्याधिकरणोभावा
भावसाधारणः समवायः कल्प्यताम् स्वसंयुक्तसमवायादिसम्बन्धबहुविधसन्निकर्षादेवाभावप्रत्यक्षोपपत्तेः अभावस्थलेपि स्वरू
पसम्बन्धकल्पनामपेक्ष्य समवायकल्पने लाघवादिति चेन्न तथा सति प्रतियोगितया नित्यसमवेतनाशं प्रति स्वप्रतियोगिस
मवेतत्वसम्बन्धेन तन्नाशस्य हेतुतया भावस्यापि विनाशापत्तेः न च सामान्यतो नाशत्वावच्छिन्नं प्रति जन्यसत्त्वेन प्रतियो
गिनो हेतुतया तादृशसामान्यसामग्र्यभावात्कथमभावस्य नाशापत्तिरिति वाच्यम् तत्तन्नाशत्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वे
न प्रतियोगिनो हेतुत्वस्यावश्यकत्वेन तादृशसामान्यकार्यकारणभावे मानाभावात् न चैवं महाप्रलयकालीननाशत्वाव
च्छिन्नानुत्पादे तत्तद्व्यक्तित्वावच्छिन्नाभावकूटस्य प्रयोजकत्वे गौरवमिति वाच्यम् अदृष्टत्वावच्छिन्नाभावस्यैव तत्प्रयो

तत्पदद्वयं समवायिकारणपरं ४

जन्यसत्त्वेन ५

च० जकत्वात्समवायासिद्धेः यत्तु यथा भावस्थले समवायसिद्धिस्तथा ऽभावस्थलेपि साहचर्यात् उक्तापत्तिवारणाय सामान्यत
५३ उक्तकार्यकारणभावाङ्गीकारात् न चैतदेव गौरवमिति वाच्यम् अभावस्थलेनन्तस्वरूपाणां सम्बन्धत्वकल्पनामपेक्ष्य
चक्षुस्संयुक्तविशेषणता चक्षुःसंयुक्तसमवेतविशेषणता चक्षुःसंयुक्तसमवेतसमवेतविशेषणतादीनामिन्द्रियभे
देन स्वातन्त्र्येण हेतुताकल्पनामपेक्ष्य चतादृशहेतुतायामेव लाघवात् भावाभावसाधारणसमवायाङ्गीकारे चक्षुःसंयु
क्तसमवायादिहेतुतयैवाभावस्थलेपि निर्वाहेण चक्षुःसंयुक्तविशेषणतादीनामहेतुत्वात् न चैवं नित्याभावे जाति
त्वापत्तिर्नित्यानेकसमवेतत्वादिति वाच्यम् भावत्वस्यापि जातिलक्षणे निवेशात् अथाभावप्रत्यक्षं प्रति चक्षुःसंयुक्तस
मवायस्य हेतुत्वे प्रतियोगिज्ञानशून्यकालेप्यभावप्रत्यक्षापत्तिः न चाभावप्रत्यक्षे प्रतियोगिज्ञानस्य हेतुतया तदभावा
न्नापत्तिरिति वाच्यम् प्रतियोगिज्ञानं विनापि चक्षुःसंयुक्तसमवायेन घटत्वादिप्रत्यक्षोत्पादेन तदभावस्याकिञ्चित्कर
त्वात् मन्मते चक्षुःसंयुक्तविशेषणतया प्रतियोगिज्ञानं विना क्वापि फलाजननेन तया फलजनने प्रतियोगिज्ञानस्य स
हकारित्वसम्भवेनोक्तापत्त्यभावादिति चेन्न त्वन्मतेपि विशेषणताविशेषणत्वनिमित्तसाक्षात्कारम्प्रति चक्षुःसंयुक्तविशे
षणतायाः अभावसमवायोभयप्रत्यक्षसाधारण्येनैकहेतुतया तादृशविशेषणतया समवायस्य प्रतियोगिज्ञानं विनापि घ

अभावीयसमवायानङ्गीकर्तॄमते २

टः समवायवानिति प्रत्यक्षोत्पादेन तथा फलजनने प्रतियोगिज्ञानविरहस्याकिञ्चित्करत्वापत्तेर्दुर्वारत्वात् ननु सम्बन्धप्रत्यक्षे सम्बन्धि
ज्ञानस्य हेतुतया सम्बन्धस्य सम्बन्धिन एव प्रतियोगितया समवायप्रतियोगिरूपादिज्ञानं विना घटादौ रूपादिसमवायप्रत्यक्षस्याप्य
नुभवविरुद्धतया प्रतियोगिज्ञाने उक्तव्यभिचाराप्रसक्त्या न प्रतियोगिज्ञानं विना चक्षुःसंयुक्तविशेषणतया कस्याप्यभावप्रत्यक्षस्योत्पत्तिरिति चे
न्न तैर्द्विनिष्ठत्वविषयतासम्बन्धेन ज्ञानं प्रति तद्भेदस्य हेतुतया घटो घट इत्यादौ शाब्दबोधवारणाय यावत्प्रत्यकनया प्रतियोगिमिश्रिताभावप्र
त्यक्षस्याभावमिन्नेऽप्युत्पत्त्या तत्तद्विनिष्ठत्वविषयतासम्बन्धेन ज्ञानोत्पत्तिनियामकतद्भेदस्याभावेऽसत्त्वादेव प्रतियोग्यविशेषिताभावप्रत्य
क्षापत्तेर्निरुक्तत्वान्नाभावीयसमवायासिद्धिरित्याहुः तन्न पूर्वोक्तनाशत्वेन जन्यसत्त्वेन सामान्यकार्यकारणभावस्य जन्यसत्त्वशून्ये प्रागभावे
नाशोत्पत्त्या व्यभिचारितत्वेन स्वीकर्तुमशक्यतयोक्तकपालादिनाशहूयादिध्वंसनाशापत्तेर्वारणात् समवायसाधकरूपसमवायी घट इत्यादि
प्रत्ययवत् ध्वंससमवायी घटः अभावसमवायी भूतलमित्यादिप्रत्ययाभावाच्च प्रत्युत प्रतियोगित्वादिरूपनानाविशेषणतासाधकध्वं
सप्रतियोगी घटः अभावानुयोगी भूतलमित्यादिप्रत्ययसम्भवात् प्रत्ययस्यैव पदार्थसाधकत्वात् अन्यथाऽनन्ताज्ञातपदार्थाभ्युप
गमापत्तेः ननु ज्ञातीत्याभावेन्द्रिययोः साक्षात्सम्बन्धासत्त्वेऽप्यधिकरणद्वारा परम्परास्वसम्बद्धविशेषणतालक्षणातिरिक्तसन्नि
कर्षस्वीकारान्नाभावप्रत्यक्षानुपपत्तिः । घटाभाववद्भूतलमित्यादाविन्द्रियसंयुक्तभूतले स्वरूपेणाभावस्य ——

गगनं स्पर्शाभाववत् स्पर्शान्यस्पर्शग्राहकयावत्कारणसत्त्वेपि स्पर्शानुपलम्भादात्मवदित्यनुमानात्-शब्दाद्वेत्यादिकं स्यात् ५ मुख्यानुमानानन्तर्भूतम् ५

अ॰ ४४ विशेषणत्वादिति चेन्न अतिरिक्तव्यापारस्य तन्निष्ठकारणत्वस्य च कल्पने गौरवात् न चासम्बद्धस्याप्यभावस्य प्रत्यक्षत्वे
कोदोष इति वाच्यम् चक्षुःसंयुक्ते घटेऽसम्बद्धस्यापि घटत्वाभावादेः प्रत्यक्षापत्तेः न च तत्परिहारिकादृष्टानुपलब्धिर्भ
विष्यतीति वाच्यम् तथा सति नानन्मात्रस्यैवकारणत्वेनेन्द्रियस्य वैयर्थ्यात् न चान्यस्यापि विशेषघटे शोत्वाभाव प्रमि
तिप्रसङ्गः प्रतियोगिग्राहकेन्द्रियेणैवाश्रयग्रहणस्याप्यङ्गत्वात् न च वाय्वाम्निस्पर्शाभावाद्यग्रहणप्रसङ्ग इति वा
च्यम् दृष्टापत्तेः तद्ग्रहणस्य प्रमाणान्तरनिबन्धनत्वात् नाप्यनुपलब्ध्यधीनाभावज्ञानमनुमित्यन्तर्भूतम् नोपमा
नस्यैव गौणानुमानस्य करणत्वेन चक्षुरादिवदनुपलब्धेस्त्वज्ञायमानाया एवकरणत्वात् अन्यथानुपलब्धेरप्यभावव
याकेवलप्रत्यक्षानुमानयोरगोचरतयानुपलब्ध्येवज्ञानं वाच्यमेवं तस्याप्यस्याप्रपीत्यनवस्थापत्तेः नापि शाब्दान्तर्भूतम् श
ब्दाश्रवणेपि सामग्रीसत्त्वे भावोपलम्भादित्यभावग्रहार्थमनुपलब्धिरूपप्रमाणान्तरमङ्गीकर्तव्यम् यत्रासुरावविद्यात्वा
दाविव नञ् तत्र विरोधिलक्षणया उपलब्धिविरोध्यनुपलब्धिरित्यर्थोन्वेयः ननूपलब्धेरभावोनुपलब्धिरित्यव्ययीभावस
मासः तथासत्यव्ययत्वापत्तेरित्याहुः अत्राभावस्य प्रत्यक्षप्रमानुपलब्धिप्रमा वेति विप्रतिपत्तिः आद्यकोटिर्नैयायिकाना
मन्यकोटिर्भट्टवेदान्तिनोः नैयायिकानामयमाशयः घटाभाववद्भूतलमिति ज्ञानस्य प्रत्यक्षत्वएकस्य प्रत्यक्षप्रमाण

मतभेदेन सहकारितयास्तन्त्र प्रमाणानयावाय

स्वकरणत्वेनलाघवम् भट्टादिमतेतूक्तज्ञानेभूतलांशेप्रत्यक्षप्रमाणस्याभावांशेऽनुपलब्धिप्रमाणस्य चकरणत्वेनानुपलब्ध
प्रमान्यकल्पनेनचगौरवम् प्रमान्याभावेऽनुपलब्धेः प्रमाणान्तरत्वानुपपत्तेः तस्यतन्निपतत्वात्प्रमाविभाजकोपाध्यवच्छिन्नप्र
मानिष्ठकार्य्यतानिरूपितव्यापारसम्बन्धावच्छिन्नकारणताघटकस्यप्रमाणपदार्थत्वात् अन्यथैकप्रत्यक्षस्यापिचक्षुरादिषट्प्रमा
णतापत्तेः नचन्यायमतेघटवद्भूतलमित्युपलम्भस्थलेपीन्द्रियसन्निकर्षवशाद्घटाभाववद्भूतलमितिप्रत्यक्षापत्तिरितिवाच्य
म् तादृशोपलम्भाभावस्यसहकारिकारणतयाकल्पनात् नचलाघवानवकाशइतिवाच्यम् अनुपलब्धौमतभेदेनव्या
पारवत्त्वेसति फलायोगव्यवच्छिन्नत्वेसतिवाकारणत्वरूपकरणत्वस्यप्रमान्यस्यचकल्पनायेस्तपाकारणत्वमा
त्रकल्पनेलाघवात् नचैवमपिन्यायमतेघटाभाववद्भूतलमित्यत्राभावेनेन्द्रियाणांस्वसम्बद्धविशेषणतारूपव्यापारस्याधि
कस्यकल्पनाद्गौरवमितिवाच्यम् उक्तप्रत्ययेधिकरणप्रत्यक्षानुरोधेनभूतलादाविन्द्रियसंयोगस्य· तत्सम्बन्धवतितत्का
रकत्वलक्षणप्रमात्वानुरोधेनविशेष्यभूतलादौविशेषणतालक्षणाभावसम्बन्धस्यच नवमते ध्यङ्गीकारात् अन्यथाविशे
षणतानङ्गीकारेसंयोगादीनांतत्रबाधेनाभावप्रत्ययस्यप्रमात्वनस्यात्।तस्मात्कोदोषइतिचेत्·भवदभिमतानुपलब्धेःप्र
माकरणत्वलक्षणप्रमाणत्वस्यासिद्धिप्रसङ्गः एव नचैवमपिमन्मते अखण्डस्येन्द्रियसम्बद्धविशेषणतालक्षणसम्ब

अ न्यस्यासिद्धिः अभावप्रत्यक्षानङ्गीकारादिति वाच्यम् तथापि तस्य घटसमवायवत्कपालमिति समवायप्रत्यक्षानुरोधेन क्लृप्तत्वा
४५ त् न च समवायोपि न प्रत्यक्षः सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात् अन्यथा घटभूतलसंयोगवत् घटाकाशसं
योगस्यापि प्रत्यक्षापत्तेरिति वाच्यम् घटसमवायवत्कपालमित्यबाधितप्रतीत्योक्तनियमघटितसम्बन्धपदस्य संयो
गपरत्वाभ्युपगमात् उक्तनियमस्य तत्तत्प्रत्यक्षीयविशेष्यताश्रयानुयोगिकत्वविशिष्ट तत्तत्प्रत्यक्षीयप्रकारताश्र
यप्रतियोगिकत्वविशिष्टसंसर्गत्वावच्छिन्नसम्बन्धस्य प्रत्यक्षे यावत्तथाविधविशिष्टसम्बन्धाश्रयप्रत्यक्षस्य हेतु
त्वमित्यर्थकत्वेनोक्तस्थले समवायसाधारणप्रत्यक्षेपि नियमाविरोधाच्च अत एव यथाश्रुतसम्बन्धप्रत्यक्षमात्रे सम्ब
न्धिज्ञानस्य हेतुत्वे निर्विकल्पके समवायभानानुपपत्तिस्तस्यासांसर्गिकविषयतया सम्बन्धप्रत्यक्ष एव सम्बन्धिप्रत्यक्ष
स्य हेतुत्वमिति कौस्तुभोक्तिरपि संगच्छते तेन च वैशेषिकमते समवायस्यातीन्द्रियत्वेन तत्प्रत्यक्षत्वे ऽपसिद्धान्त इति वाच्य
म् तत्प्रत्यक्षस्य नञ्ग्राहकविशेषणतासन्निकर्षस्य च तत्र तत्र नवीनैः स्वीकारात् न च समवायोतीन्द्रियो नित्यत्वे सति चे
तनान्यभावत्वात्कालादिवदिति वैशेषिकानुमानमतीन्द्रियत्वसाधकम् घटत्वादौ व्यभिचारात् वस्तुतोतीन्द्रियसाधार
णैकसमवायानङ्गीकर्तृनवीनमते समवायोपि संयोगवन्नानैव यथा जसंयोगो नित्यो ऽन्यस्त्वनित्यः तथानित्यमात्र

द्रव्यगुणसामान्यविशेषेषुसमवायोनित्योऽन्यस्त्वनित्यइत्येतन्मतेऽनायासेनैवघटसमवायवद्भूतलमितिसमवायप्रत्यक्षानुरोधे।
नाखण्डसेन्द्रियसम्बद्धविशेषणत्वस्यसिद्धिः नन्वेवमपिनित्यः सम्बन्धः समवायइतितल्लक्षणाव्याघातइतिचेत् अजसंयोगेऽत्य
न्ताभावीयस्वरूपसम्बन्धेचातिप्रसक्तत्वेनेष्टत्वात्संयोगान्यत्वेसतिमुख्यसम्बन्धत्वस्यैवतल्लक्षणत्वात् अत्रैमुख्यत्वंचविभा।
जकधर्मवत्त्वेसतिसम्बन्धानन्तराघटितत्वेसतिसम्बन्धत्वम् कालिकादिसम्बन्धेतिव्याप्तिवारणायप्रथमंसत्यन्तम् घड्डि
धेन्द्रियसन्निकर्षविभाजकधर्मवतिसंयुक्तसमवायादावतिव्याप्तिवारणायद्वितीयंसत्यन्तम् द्रव्यादावतिव्याप्तिवारणा
यसम्बन्धत्वम् संसर्गविभाजकधर्मवत्त्वेसतिस्वेतराघटितत्वनुफलितमिति भट्टादीनांत्वयमाशयः न्यायरीत्यास्त्वखा
स्वरूपसम्बन्धसिद्धिः ननुमन्मते मानाभावेनसमवायस्यैवानङ्गीकारात् नचगुणवान्घटइतिविशिष्टबुद्धिः विशेषण
विशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात्दण्डीतिविशिष्टबुद्धिवदित्यनुमानमितिवाच्यम् संयोगादीनांबाधेना।
स्मदभिन्नस्वरूपस्यैवसाधकत्वात्समवायासिद्धेः नचैवंयत्समवेतंकार्यमुत्पद्यतेतत्समवायिकारणमितिसमवा।
यिकारणव्यवस्थानस्यात्भवन्मतेऽप्युपादानत्वेनस्वीकारादितिवाच्यम् तत्स्थानेयत्सम्बद्धंकार्यमुत्पद्यतइत्यस्यै।
वनिवेशात् नचकपालसम्बद्धघटध्वंसंप्रतिकपालस्यसमवायिकारणत्वापत्तिरितिवाच्यमत्थात्वेसतिविरुद्धात् नच

श्र· कपालादिनाशे घटध्वंसादिनाशस्यावश्यकतया पुनर्घटोन्मज्जनापत्तिरिति वाच्यम् यत्सम्बद्धं भावकार्यमुत्पद्यत इत्येवं
५६ लक्षणाभावत्वस्यापि निवेशात् तदानीं कपालादिकारणस्यासत्त्वादेवाप्यभावाच्च न च गौरवम् · समवायाकल्पनस्यैव लाघ
वादिति न तदनुरोधेन विशेषणतासन्निकर्षसिद्धिरिति · अत्रोच्यते · अस्तु समवायानङ्गीकारेणोक्तसन्निकर्षासिद्धिः त
थापि घटादौ धर्मिणि ज्ञेयत्वप्रमेयत्वाभिधेयत्वप्रतियोगित्वानुयोगित्वाधारत्वाधेयत्वादीनां तद्धर्माणां प्रत्यक्षानुरोधेन
तत्सिद्धिरूहनीया · न ह्यत्रापि विवादः भवतापि मया घटो ज्ञात इत्यादिप्रतीत्या ज्ञाततादीनां प्रत्यक्षताभ्युपगमात् त
दुक्तमत्र अयं घट इत्यादिज्ञानमतीन्द्रियं ज्ञानजन्या ज्ञातता तु प्रत्यक्षा तया च ज्ञानमनुमीयत इति · अनुमानाकारस्तु म
या घटो ज्ञात इति ज्ञानीयज्ञातता · घटविशेष्यकघटत्वप्रकारकज्ञानजन्या घटवृत्तिघटत्वप्रकारकज्ञा ततात्वात्
यायद्वृत्तियत्प्रकारकज्ञातता · सा तद्विशेष्यकतत्प्रकारकज्ञानजन्या · यथा पटे पटत्वप्रकारकज्ञातेति भट्टमते ज्ञात
तापि सविषया तथा च ताभावग्राहकसन्निकर्षासिद्धिरिति इदमत्र तत्त्वम् इन्द्रियसम्बद्धविशेषणतालक्षणस्वरूपस
म्बन्धस्यासत्त्वेपि नाभावप्रत्यक्षानुपपत्तिः तद्घटकानां संयोगादीनां विशेष्यविशेषणभावापन्नानामेव सम्बन्धत्वोपप
त्तेः · अत एवानुमानखण्डे जगदीशतर्कालङ्कारैरुक्तम् · घटो नास्तीत्यत्राभावे घटस्य सम्बन्धो घटत्वावच्छिन्नप्रतियोगि

णोकत्वरूपः सचनाखण्डात्मकः अपितु घटत्वावच्छिन्नत्वं प्रतियोगित्वं चेति त्रितयमेव विशेष्यविशेषणाभावापन्नं संसर्गाऽ
जि· एवमेव रघुनाथशिरोमणिना दीधितिग्रन्थे· वह्निर्नास्तीत्यत्राभावे वह्नित्वेन तदवच्छिन्नत्वं प्रतियोगित्वं च संसर्गमर्याद
याभासते प्रतियोगिन इत्युक्तम् तथा च न संसर्गाऽसिद्ध्याऽभावाप्रत्यक्षमिति सिद्धम् वस्तुतो भूतले घटो नास्तीति मया दृष्टमित्य
नुभवात्· इन्द्रियस्यानन्यथासिद्धान्वयव्यतिरेकवशाच्चेन्द्रियजन्यं प्रत्यक्षमेवाभावस्येत्युक्तम्· दृशेश्चाक्षुषज्ञानवाचकतया
ऽनुमित्यादाविवानुपलब्ध्येप्यसंभवात् नचेन्द्रियस्याधिकरणप्रतियोगिनोर्ग्रहे एवोपयोग इति वाच्यम् अधिकरणादिज्ञा
नस्यानुमितिस्मरणाद्यात्मकस्यान्यथा तादृशायामपि सत्त्वेनोपयोगानुपपत्तेः नचानुपलब्ध्याऽभावज्ञाने प्रतियोगिग्राह
केन्द्रियजन्याधिकरणादिज्ञानं हेतुरिति वाच्यम् परमते स्तम्भे पिशाचत्वाद्यभावग्रहे प्रतियोगिग्राहकेन्द्रियाप्रसिद्धेः वा
य्वादावुद्भूतरूपाभावस्य परमाणौ महत्त्वाभावस्याप्रत्यक्षापत्तेश्चेति ध्येयम् यत्तु प्रतियोग्यनुपलम्भमात्रस्य न प्रतियोग्य
भावज्ञानजनकत्वम् तत्सत्त्वेपि सुषुप्त्यादावभावज्ञानानुत्पत्त्याऽव्यभिचारात् तद्वारणाय पूर्वोक्तप्रतियोगितत्सन्निकर्षेतर
प्रतियोगिग्राहकसामग्रीरूपयोग्यतासहितानुपलब्धिरभावग्राहकावाच्या तथा च यत्र यत्र घटादीनां योग्यतासहितानु
पलब्धिस्तत्र तत्र घटादीनामभाव इत्येवं योग्यानुपलब्धेर्धूमादिवदव्यभिचारितयाऽभावानुमितिजनकत्वोपपत्तौ कुतः प्र

अ॰ मारणान्तरता। अनुमानप्रयोगस्तु भूतलं घटाभाववत् तादृशयोग्यताविशेषे सति घटानुपलम्भात् स्थलान्तरवदित्यादिरूपमिति
४७ सौगतमतं तन्न सम्यक् अनुपलब्धेर्व्यापाराभावेनानुमितिकरणत्वासम्भवात् न च प्रतियोगिस्मरणमधिकरणग्रहणं वास्तु तद्व्या
पार इति वाच्यम् तयोर्विषयेन्द्रियादिसामग्रीजन्यत्वेप्यनुपलम्भरूपकरणाजन्यत्वात् करणाजन्यत्वे सति करणजन्यफलज
नकस्यैव करणव्यापारत्वात् न च केवलानुपलम्भस्य तदजनकत्वेप्युक्तसामग्रीरूपयोग्यताविशिष्टस्यास्यैव तज्जनकता
शिखोध्वस्त इत्यादौक्त चिह्नविशेषणात्त्रिधर्मस्य विशिष्टजनित्वदर्शनादिति वाच्यम् तथासति घटादिभावप्रत्यक्षात्पू
र्वक्षणे सर्वत्रैव प्रागभावात्मकघटाद्यनुपलम्भसम्भवेन भावप्रमितीनामपीन्द्रियादिसहितभावानुपलम्भकरणजन्यतयाऽना
सुतरां प्रत्यक्षत्वादिप्रमास्विन्द्रियादीनां करणत्वप्रवादः प्रत्यस्तमियात् न च विषयसत्त्वेनैवानुमित्यादौ प्रतिबन्धकत्वमिति वाच्य
म् अस्तु नस्तत्प्रत्यक्षे केषाञ्चिद्दूरत्वादीनां प्रतिबन्धकत्वदर्शनेपि स्वानुमित्यादौ विषयाणां प्रतिबन्धकत्वादर्शनात् स्वत
न्त्रकल्पने गौरवाच्च किञ्चानुमितिकरणमनुमानं तच्च ज्ञायमानं लिङ्गं लिङ्गज्ञानं वा नेयं तथा सम्भवति चक्षुरादिवद
नुपलब्धेरज्ञायमानाया एव करणत्वात् न चाज्ञातलिङ्गस्याप्यनुमानत्वे को दोष इति वाच्यम् लिङ्गज्ञानाभावे व्याप्तिस्मरणपक्ष
धर्मत्वज्ञानानुपपत्तेरेव — दोषत्वात् नन्वस्तु ज्ञातानुपलब्धिरेवाभावप्रमायां प्रमाणमिति चेन्न तज्ज्ञानासम्भवात् अनुपल

ब्धिलिङ्गस्याप्यभावत्वेनभवतेन्द्रियविषयत्वानङ्गीकारात्तस्यानुमेयत्वाङ्गीकाराच्चानुपलब्धिप्रमाणमेवानुपलब्धिज्ञानेपिप्र
रणमेवमयेनत्वत नापीत्यनवस्थापत्तेरु क्तत्वात् किञ्चोक्तप्रतियोग्युपलम्भस्यप्रतियोग्यभावप्रत्यक्षप्रतिप्रतिबन्धकत्वेना
भावप्रत्यक्षेउक्तप्रतिबन्धकाभावविधयैवतस्यहेतुत्वमित्यस्मिन्मतेनानुपलब्धेःस्वातन्त्र्येणासहकारिता प्रमाणान्तापिवा सौगतम
तेऽतिरिक्तप्रमाणत्वेन भट्टपादवेदान्तिमतेत्वभावस्यातिरिक्तानुपलब्धप्रमाङ्गीकारेणानुमितिसामग्र्याइवभिन्नविषयकप्रत्यक्षा
दिकंप्रत्यनुपलब्ध्यादिघटितायाअनुपलब्धप्रमासामग्र्याअपिप्रतिबन्धकत्वकल्पनेनगौरवंपरमतिरिच्यतइतिस्यादन्यत्रविस्त
रः चित्सुखाचार्य्यास्तु भवतुवाभिन्नैवानुपलब्धिरनुमानात् तथापिनाभावः प्रमितिकारणम् विकल्पासहत्वात् तथाहि
किमुप लब्धेः प्रागभावोनुपलब्धिरुतप्रध्वंसः किंवान्योन्याभावोत्यन्ताभावोवा नाद्यः दृष्टनष्टेघटेनदुपलब्धिप्रागभावाभा
वेपियदनुपलब्धिप्रध्वंसेनैवाभावप्रमितिदर्शनात् नापिद्वितीयः घटादिप्रागभावात्यन्ताभावप्रमित्यनुत्पत्तिप्रसङ्गात् ।
घटाद्युत्पत्तेः प्राग्घटादिनेन्द्रियसन्निकर्षाभावेनप्रतियोग्युपलब्धेरसंजातत्वादेवतत्प्रतियोगिकप्रध्वंसाभावात् उत्त
रकालेचघटादिप्रागभावस्यैवनाशात्तत्प्रत्यक्षानुपपत्तेः नापितृतीयः घटादीनामुपलब्धिसमयेप्यात्मनितदन्योन्याभाव
सम्भवेनतदभावप्रतीतिप्रसङ्गात् नापिचतुर्थः दृष्टनष्टघटाद्यभावदृश्यमानानुत्पन्नघटाद्यभावप्रमित्यनुदयापत्तेः अ

अ· तीतघटाद्युपलम्भध्वंसवतिभाविघटाद्युपलम्भप्रागभाववतिचात्मनिघटाद्युपलम्भात्यन्ताभावासम्भवात्· ध्वंसप्रागभावा
५८ भ्यामत्यन्ताभावस्यविरोधात्· एतेनोपलम्भसंसर्गाभावःकारणमित्यपिनिरस्तम् तत्राप्युक्तप्रागभावादिविकल्पानामप्रा
तिबद्धप्रसरत्वादित्यनुपलब्धेःकारणत्वेनैवनास्तिकुतःप्रमाणत्वसहकारित्वशङ्कापीतिप्रत्यक्षत्वप्रदीपिकायामाहुः तद
प्यमनोरमम् उपलम्भादिप्रतिबन्धकसंसर्गाभावस्यैवकार्य्यजनकत्वात्नचप्रतिबन्धकसंसर्गाभावस्यप्रागभावत्वादि
नाहेतुत्वेउक्तव्यभिचारापत्तिरितिवाच्यम् एकधर्मावच्छिन्नकार्यतानिरूपितानानाप्रागभावत्वादिनाहेतुतास्वीकारेव्य
भिचारसम्भवेऽपिनादृशकार्यतानिरूपितैकसंसर्गाभावत्वादिरूपेणाहेतुतायांव्यभिचारानवकाशात्· अनन्यथासिद्धका
र्य्याव्यवहितपूर्ववृत्तित्वात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वस्यैवकारणतापदार्थत्वेनात्रानुगतप्रतिबन्ध
कसंसर्गाभावत्वरूपतादृशधर्मवत्त्वयोक्तप्रागभावादीनांत्रयाणांकारणत्वसम्भवात् नन्वेवमपिप्रतिबन्धकप्रागभा
वादीनांत्रयाणांयदिप्रतिबन्धकनिष्ठप्रतियोगिताकसंसर्गाभावत्वेनहेतुता· तदायत्किंचित्प्रतिबन्धकसत्त्वेऽपिप्रति
बन्धकान्तरप्रतियोगिकसंसर्गाभावसत्त्वेनकार्यापत्तिः यदितुप्रतिबन्धकप्रतियोगिकसंसर्गाभावकूटत्वेनहेतुता ।
तदाक्वापिकार्यंनस्यात्· ध्वंसप्रागभावादीनामेकदैकत्रासत्त्वेनतत्कूटाधिकरणत्वस्यकुत्रापिकदाप्यसम्भवात्यदिच

प्रतिबन्धकत्वावच्छिन्नप्रतियोगिताकसंसर्गाभावत्वेनसामान्यरूपेणहेतुता· तदाध्वंसप्रागभावयोर्हेतुतानस्यात्· तयोः
सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानङ्गीकारादितिचेन्नध्वंसप्रागभावयोरपिसामान्यधर्मावच्छिन्नप्रतियोगिता
कत्वाङ्गीकारात् नतुनीलघटाधिकरणेकपालादौपीतघटोनास्तीतिप्रत्ययःनतुघटोनीलघटोवानास्तीति· एवंपीतघटा
धिकरणेनीलघटोनास्तीतिप्रत्ययःनतुपीतघटोनास्तीत्यादिरपीतितत्तत्प्रत्ययोपपत्तयेहितत्तद्विषयभूताभावानांभेदस्याव
नायात्यन्ताभावप्रतियोगितायांतत्तद्धर्मावच्छिन्नत्वमङ्गीक्रियते· एवमन्योन्याभावेपि· घटादिध्वंसप्रागभाववतिकपाले
त्वेनापिरूपेणघटादीनांतदानीमसत्त्वादुक्तयुक्तसम्भवेनतयोःकिञ्चिद्धर्मावच्छिन्नप्रतियोगिताकत्वमप्रामाणिक
मेवेतिचेन्नप्रतिबन्धकत्वेनरूपेणधर्मानवच्छिन्नप्रतिबन्धकनिष्ठप्रतियोगिताकसंसर्गाभावत्वेनध्वंसादीनांत्रयाणांकारणा
त्वसम्भवात् एतेनप्रतिबन्धकसत्त्वेप्युभयत्वादिनातदत्यन्ताभावसत्त्वात्कार्योदयापत्तिरितिनिरस्तम् उभयत्वादीनांप्रा
तिबन्धकत्वेनरूपत्वात् नचैवमप्युक्तदोषाप्रतीकारः प्रतिबन्धकसत्त्वेपिकिञ्चित्प्रतिबन्धकप्रतियोगिकताद्दृशसंसर्गा
भावसम्भवादितिवाच्यम् प्रतिबन्धकत्वेनरूपेणधर्मानवच्छिन्नतत्कार्याधिकरणवृत्तियावत्प्रतिबन्धकनिष्ठप्रतियोगिता
कत्वेनसंसर्गाभावस्यहेतुताभ्युपगमात् नचैकसम्बन्धेनप्रतिबन्धकसत्त्वेप्यन्यसम्बन्धेनतत्सामान्याभावस्यापिसम्भवा

अत्रपद्यदृत्तिगगनेनप्रतिबन्धकाभावमादायदोषप्रसङ्गाक्मेतेतदेदंधर्मपदंनदेयम्

अ· त्कार्योपपत्तिर्दुर्वारा· यदि च प्रतिबन्धकतावच्छेदकसम्बन्धावच्छिन्नत्वं तादृशप्रतियोगिताविशेषणमित्युच्यते· तदा ध्वंसप्राग
४९ भावयोरसङ्ग्रहः· तत्प्रतियोगितायाः सम्बन्धावच्छिन्नत्वाभावादिति वाच्यम् प्राचीनैर्ध्वंसादिप्रतियोगितायामपि सम्बन्धावच्छि
न्नत्वोपगमात्· तदुक्तं जगदीशेः प्रागभावध्वंसयोरप्युत्तरकालपूर्वकालावेव प्रतियोगितावच्छेदकसम्बन्धाविति ताभ्यामेव
सम्बन्धाभ्यां प्रतियोग्यारोपः प्रागभावध्वंसयोः प्रत्यक्षे हेतुरतस्तयोर्नासङ्ग्रह इति प्राचामाशय इति· यदि च समवायेन घटाधि
करणे संयोगेन घटो नास्ति· संयोगेन घटाधिकरणे समवायेन घटो नास्तीति प्रतीतेः सर्वसम्मततया घटतदभाववत्त्वबु
द्ध्योः प्रतिबद्ध्यप्रतिबन्धकभावसंरक्षणाय तत्तदभावीयप्रतियोगितायां तत्तत्सम्बन्धावच्छिन्नत्वाङ्गीकारेऽपि घटध्वंसादि
प्रतिकपाले च तदानींतनेनापि सम्बन्धेन घटादेरसत्त्वात्तादृशप्रतीत्यसम्भवेन ध्वंसादिप्रतियोगितायां संसर्गावच्छिन्नत्वमप्रा
माणिकमेवेत्युच्यते· तदा स्वरूपप्रतिबन्धकनिष्ठप्रतियोगितायां प्रतिबन्धकतावच्छेदकसम्बन्धेतरसम्बन्धानवच्छिन्न
त्वविशेषणं तेनाप्युक्तदोषवारणादिति प्रतिबन्धकप्रागभावादीनामुक्तैकरूपेण संसर्गाभावत्वेन हेतुतोहनीया· अथैवम
प्येकदाहादिकार्यप्रतिबन्धकमण्यादिमति अन्यघटाभावप्रत्यक्षादिकार्यविघटकयावत्प्रतिबन्धकाभाववति च भूतलादौ
घटाद्यभावप्रत्यक्षानुपपत्तिः तत्र तत्कार्योपयोगियावत्प्रतिबन्धकाभावासत्त्वात्· यदि च तत्तत्कार्यं प्रति तत्तत्कार्यविघटकत

त्स्यलीयपर्याप्तप्रतिबन्धकाभावत्वेन विशिष्यैव हेतुता स्वीक्रियते· तदा सामान्यकार्यकारणभावे मानाभावेन कार्यध्वंसादीना
मेकरूपेण हेतुता न च यद्विशेषयोः कार्यकारणभावो सति बाधके तत्सामान्ययोरपीति नियम एव तत्र मानमिति वाच्यम् तस्या
प्यप्रयोजकत्वात् न च कार्यसामान्याभावे कारणानां प्रतिबन्धकाभावानां तत्तद्व्यक्त्यभावकूटस्य प्रतिबन्धकस्य प्रयोजक
त्वे गौरवम् कारणतावच्छेदकप्रतिबन्धकाभावत्वावच्छिन्नाभावस्यैकस्य तथात्वे लाघवम् तच्च प्रतिबन्धकसंसर्गाभा
वत्वस्य कारणतावच्छेदकत्वमन्तरा न सम्भवति· कारणतावच्छेदकधर्मावच्छिन्नाभावस्यैव कार्यतावच्छेदकधर्मावच्छि
न्नाभावप्रयोजकत्वात् तथा च लाघवमूलक एव यद्विशेषयोरित्यादिन्याय इति वाच्यम् यतः कारणतावच्छेदकधर्मावा
च्छिन्नाभाव एव कार्याभावे प्रयोजक इति न नियमः किन्तु स्वरूपसम्बन्धरूपप्रयोजकत्वम् प्रतीत्यनुरोधेन लाघवानतिप्रसक्त
धर्मावच्छेदेन कल्प्यत इति नियमः तथा च लाघवादेव कारणतानवच्छेदकप्रतिबन्धकसंसर्गाभावत्वावच्छिन्नप्रति
योगिताकैकाभावस्य प्रतिबन्धकरूपस्य कार्यसामान्याभावप्रयोजकत्वम् प्रतिबन्धकाभावत्वेन कार्यत्वेन कार्यकारणभा
वमन्तरापि सूपपादनमेवेति सामान्यकार्यकारणभावे प्रमाणाभाव एवेति चेत् मास्तु तत्संसर्गाभावत्वेन सामान्यरूपेण हेतुता
अस्तु च विशिष्यैव तत्तद्व्यक्तित्वेन प्रतिबन्धकध्वंसादीनां हेतुता· तथाप्यभावप्रत्यक्षे प्रतियोग्युपलम्भाभावानां तत्तद्व्यक्तित्वे

अ०
५० नापिकारणतापानिराबाधतयानवित्तुस्वाशासिद्धिरितिप्राचामाशयः॰ अत्रनव्यनैयायिकास्तु प्रतिबन्धकसंसर्गाभावत्वेनात्य
न्ताभावस्यैवहेतुतानतुध्वंसप्रागभावयोरपिनचान्योन्याभावभिन्नाभावत्वलक्षणसंसर्गाभावत्वस्यध्वंसादिसाधारणत्वेना।
तिप्रसक्ततयानकारणतावच्छेदकत्वसम्भवइतिवाच्यम्प्रतिबन्धकानामेकसम्बन्धेनसत्त्वेप्यन्यसम्बन्धेनतदभावमाद।
यकार्य्योत्पत्तिवारणाय यद्यद्रूपेणयद्यत्संसर्गेणप्रतिबन्धकानांकार्य्यविघटकत्वं तत्तद्रूपावच्छिन्नतत्तत्संसर्गाव।
च्छिन्नप्रतियोगिताकाभावत्वलक्षणसंसर्गाभावत्वेनात्यन्ताभावस्यैवहेतुत्वात्· ध्वंसप्रागभावयोश्चप्रतियोगितायांतत्तद्रू
पतत्तत्संसर्गावच्छिन्नत्वानुपगमेनासङ्ग्रहादेवानतिप्रसङ्गात् नचैवमत्यन्ताभावत्वेनैवात्यन्ताभावस्यकारणतास्तुकिंसं
सर्गाभावत्वेनेतिवाच्यम्नित्यत्वाघटितनिरुक्तसंसर्गाभावत्वापेक्षयातद्घटितनित्यत्वेसतिसंसर्गाभावत्वरूपात्यन्ता
भावत्वस्यगुरुतयाकारणतानवच्छेदकत्वात् नचैवंप्रतिबन्धकध्वंसप्रागभावाधिकरणेकार्य्यानुत्पत्तिप्रसङ्गः· अत्यन्ताभा
वस्यध्वंसप्रागभावाभ्यांविरोधादेवतत्रासत्त्वादितिवाच्यम्विरोधेबीजाभावेनतत्राप्यत्यन्ताभावसम्भवात्नचप्रतियो
गिसत्त्वकालेपितदत्यन्ताभावस्यनित्यत्वेनसत्त्वात्तत्रकार्य्योत्पत्तिस्तदवस्थैवेतिवाच्यम् प्रतियोगिविशिष्टाधिकरणेप्रतियो
ग्यभावीयविशेषणस्वरूपसम्बन्धानुपगमात् एवमेवोत्तेजकाभावेत्यत्रापिबोध्यम् तेनेनप्रागभावादिविकल्पेनोक्त
प्रतियोगिद्रव्यभावत्वरूपात्यन्ताभावत्वेनविशिष्टायत्तिरितिनिरस्तंतद्रूपयदेतप

दोषावकाशः तथाचेन्द्रियेणाभावप्रत्यक्षे प्रतियोग्युपलम्भात्यन्ताभावस्यैकस्यैव कारणत्वेनोक्तप्रागभावादिविकल्पासम्भवादि
त्यकौमेनाप्यनुपलब्धिरङ्गीकार्य्येति प्राहुः। अत्रातिनव्यास्तु अभावप्रत्यक्षे निरुक्तयोग्यानुपलब्धेर्हेतुत्वे मानाभावः। जलपरमा
णावादौ पृथिवीत्वाद्यभावग्रहस्याप्रसिद्ध्यापादनासम्भवात् न च प्रसिद्धस्य पृथिवीत्वाद्यभावग्रहस्याभावविषयतानिरूपितवि
षयतासम्बन्धेन जलपरमाणावादावापत्तिः सम्भवतीति वाच्यम् आपादकाभावात् न च विशेष्यतासम्बन्धावच्छिन्नप्रतियोगित
कप्रतियोग्युपलम्भाभावस्य बाधाभावमुद्दिश्योक्तसम्बन्धेनाभावप्रत्यक्षे हेतुतया तस्यैव जलपरमाण्वादौ तेन सम्बन्धेनाभावप्रत्य
क्षापादकत्वमिति वाच्यम् प्रतियोग्युपलम्भस्यात्मनिष्ठप्रत्यासत्त्यैव प्रतिबन्धकत्वोपगमेनात्मनिष्ठप्रत्यासत्त्यैव तदभावस्य हेतुतया
विषयनिष्ठप्रत्यासत्त्या तदभावप्रत्यक्षापादकत्वविरहात् न चात्मनिष्ठप्रत्यासत्त्या प्रतिबन्धकत्वोपगमे धिकरणविशेषान्तर्भाव
आवश्यकः अन्यथाधिकरणान्तरविशेष्यकप्रतियोग्युपलम्भस्याप्यधिकरणान्तरावगाह्यभावप्रत्यक्षं प्रति प्रतिबन्धकत्वापत्तेः
तथाचानन्ताधिकरणभेदेन प्रतिबन्धकताबाहुल्यापत्तिरिति तदपेक्षयाधिकरणनिष्ठप्रत्यासत्त्या प्रतिबन्धकतायां लाघवमि
ति वाच्यम् समानविशेष्यकयोरपि विभिन्नधर्मितावच्छेदककाभावप्रत्यक्षप्रतियोग्युपलम्भयोः प्रतिबध्यप्रतिबन्धकभावविरहेण
समानविशेष्यताप्रत्यासन्निकस्यापि धर्मितावच्छेदकविशेषनिवेशस्यावश्यकतया धर्मितावच्छेदकधर्मान्निवेश्याधिकरण

श्र॰ न्यनिवेशात्मनिष्ठप्रत्यासत्त्यैवप्रतिबन्धकत्वोपगमेनभिन्नविशेष्यकयोरपिसमानधर्मितावच्छेदकज्ञानयोः प्रतिबध्यप्रतिबन्धकभावोप
५५ गमेक्षतिविरहात् अथधर्मितावच्छेदकभेदेनप्रतिबन्धकताकल्पनमपेक्ष्यसमानधर्मितावच्छेदकत्वप्रत्यासत्त्यैवतत्कल्पनमुचि
तम्: एवंचप्रतियोग्युपलम्भाभावस्यधर्मितावच्छेदकनिष्ठप्रत्यासत्त्यैवहेतुतयाजलपरमाणुत्वादौनादृशकारणबलात्पृथिवी
त्वाद्यभावप्रत्यक्षापत्तिवारणाययोग्यताविशिष्टधर्मितावच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकप्रतियोग्युपलम्भाभावस्य
हेतुत्वमावश्यकम्: योग्यत्वंचप्रतियोगितद्व्याप्येतरप्रतियोग्युपलम्भककारणसमानाधिकरणवृत्तित्वम्: जलपरमाणुत्वादौ
चतद्विशिष्टानुपलम्भाभावान्नातिप्रसङ्गः इतिचेन्नधर्मितावच्छेदकघटिततनिष्ठयत्वानाहार्यत्वादिनिवेशानुरोधेनप्रतिबन्धक
तावच्छेदककोटौधर्मितावच्छेदकनिवेशस्यावश्यकतयात्मनिष्ठप्रत्यासत्त्यैवप्रतियोग्युपलम्भस्यप्रतिबन्धकत्वात् वस्तुतस्तु
त्पयुक्तयानुमितिपरामर्शयोर्हेतुत्वमपिसमानधर्मितावच्छेदकत्वप्रत्यासत्त्यैववाच्यम्तथाचघटोघटभेदव्याप्यवानित्याद्याकारक
परामर्शाद्घटोघटभिन्नइत्याद्यनुमितिवारणायतद्धर्मावच्छिन्नविषयतासम्बन्धेनज्ञानंप्रतितद्धर्मभेदस्यावश्यंकारणताकल्पनीया।
एवंचतत्रघटभेदाद्यनुमितेर्धर्मितावच्छेदकतासम्बन्धेनोत्पन्नोघटत्वादिभेदस्यापेक्षणीयतयानोक्तापत्तिः तथाचपरमाणुत्वादि
भेदस्यापितदवच्छिन्नविषयतासम्बन्धेनज्ञानंप्रतिहेतुतयापृथिवीत्वाद्युपलम्भाभावस्यतादृशभेदकूटसहकृतस्यैवधर्मितावच्छे

दकतासम्बन्धेन पृथिवीत्वाद्यभावप्रत्यक्षोत्पादप्रयोजकत्वस्य धर्मितावच्छेदकनिष्ठप्रत्यासत्त्यासत्तियोग्युपलंभाभावहेतुत्वेपिनो
क्ताभावप्रत्यक्षापत्तिः अथैवमप्यभावप्रत्यक्षे धर्मिभाने नियामकाभावेन जलत्वादिना स्थूलजलादेरिव जलपरमाण्वादेरपि पृ
थिवीत्वाद्यभावधर्मितया भानं किंन स्यादिति चेन्न पृथिवीत्वाद्यभावप्रत्यक्षस्य धर्म्यंशे लौकिकत्वनियमेन क्लृप्तलौकिकप्रत्यक्ष
हेतुमहत्त्वादिघटितलौकिकप्रत्यक्षसामग्र्या एव तन्नियामकतया जलपरमाण्वादेः पृथिवीत्वाद्यभावधर्मितयाऽभानादिति
प्राहुः पुनरुच्यते· पूर्वोक्तरीत्या विशिष्ट्येव तत्तद्व्यक्तित्वेन कार्यकारणभावस्य सिद्धान्ततयोत्तेजकाभावविशिष्टप्रतिबन्धकाभाव
३९. त्वरूपगुरुधर्मेण तत्तद्व्यक्तित्वेनापि हेतुता निर्युक्तिका तथाहि यत्र चक्षुरादिघटिता सामग्री· घटवद्भूतलमित्यादिप्रतिबन्ध
कज्ञानम्· इदं ज्ञानमप्रमेत्याद्युत्तेजकज्ञानं च वर्त्तते तत्र घटाभावादीनां चाक्षुषं जायते तं प्रत्युक्तसामग्र्या उक्तोत्तेजकस्य
च तत्तद्व्यक्तित्वेन हेतुता। एवं यत्रोक्तोत्तेजकं प्रतिबन्धकं च नास्ति चक्षुरादिघटिता सामग्री च वर्त्तते तत्रापि घटाभावादिचाक्षुषं जा
यते तं प्रत्युक्तसामग्रीमात्रस्योक्तरूपेण हेतुता· एवं यत्र प्रतिबन्धकं नास्ति उक्तोत्तेजकसामग्री च वर्त्तते तत्राप्यभावचाक्षुषं जाय
ते तं प्रत्युक्तोत्तेजकसामग्र्योः तत्तद्व्यक्तित्वेन हेतुता· एवं यत्रोत्तेजकं नास्ति प्रतिबन्धकं चक्षुरादिघटिता सामग्री च वर्त्तते तत्र घ
टाभाववद्भूतलमित्यादिचाक्षुषस्यानुदयात्तं प्रति घट वद्भूतलमित्यादिज्ञानमात्रे कारणत्वे कार्यानुत्पत्तिप्रयोजकत्व

श्री०
५२

लक्षणप्रतिबन्धकताङ्गीकार्य्या न तु कारणीभूताभावप्रतियोगित्वरूपा· उक्तरीत्या प्रतिबन्धकाभावानामकारणत्वात् य
द्वा विशिष्य कार्यकारणभावस्य तत्तत्कार्यबलकल्प्यत्वात्तत्र च तत्र चाक्षुषादिकार्यस्यैवानुदयात्तन्निरूपितकारणतापि त
त्र चक्षुरादौ न कल्प्यते· एवं त्वाचादावपि· न चैवं सामान्यकार्यकारणभावो न स्यात्· तस्य निर्युक्तिकत्वात् न च प्रतिब
न्धकाधिकरणावृत्तिकार्यसामान्याभावे तत्तत्कारणाभावकूटस्य प्रयोजकत्वकल्पनापेक्षया तत्र प्रतिबन्धकाभावरूपकार
णसामान्याभावस्य प्रयोजकत्वमेव युक्तमिति वाच्यम् उक्तोत्तरत्वात्· सृष्टिकाले कार्यसामान्याभावासिद्धेश्च न च महाप्रल
ये तदस्तीति वाच्यम् महाप्रलय एव दृढतरप्रमाणाभावात् तत्सत्वेपि तदानीं भावकारणानामप्यदृष्टादीनामसत्वादेव का
र्यसामान्याभावोपपत्तेश्च न हि तत्रादृष्टमस्ति· कार्यमात्रध्वंसस्यैव महाप्रलयत्वात् न चानन्तरसर्गानुपपत्तिः। अदृष्टादि
साधकाभावेनेष्टत्वात् अन्यथा मुक्तानामपि वामदेवादीनां संसारापत्तेः न चैतत्कल्पने सर्वत्र तत्तद्व्यक्तित्वेन कारणतायां
गौरवमिति वाच्यम् लाघवसम्भवे हि गौरवस्य दोषत्वात्· अनन्ततत्तत्कार्यं प्रत्यनन्ततत्तद्व्यक्तीनां प्रतिबन्धकता तद
भावानां कारणता च कल्पनापेक्षया प्रतिबन्धकस्थले कार्यापत्तिवारणाय तदन्यतरव्यक्तीनां कार्यानुत्पादकत्वादिमात्र
कल्पन एव लाघवाच्च न च स्वाभावानामकारणत्वे मण्यादीनां प्रतिबन्धकतानुपपत्तिरिति वाच्यम् स्वप्रत्यये गुरुत्वा

भावादीनामकारणत्वेपिगुरुत्वादीनांस्वातन्त्र्येणप्रतिबन्धकतावदुपपत्तेः। उत्तेजकाभावप्रतिबन्धकयोरेकत्रैवविशेष्य
त्वस्याद्वैकायुक्तभावेनोत्तेजकाभावविशिष्टप्रतिबन्धकानामभावत्वेन प्रतिबन्धकविशिष्टोत्तेजकाभावानामभाव
त्वेनवेतिकारणताद्वयकल्पनापत्तेश्च नचापसिद्धान्तः प्रतिबन्धकानांकारणत्वेकार्यानुत्पत्तिप्रयोजकत्वरूपलक्ष
णासिद्धिश्च कार्यानुत्पत्तेः कार्यप्रागभावतयानादित्वेनप्रयोज्यत्वासम्भवादितिवाच्यम् योगक्षेमात्मकप्रयोजकतां
यावद्भवादिसम्मतत्वात् अतएवप्रत्यवायानुत्पत्तेस्तादितयानदर्थेनित्येकर्मणिकथंप्रवृत्तिरितिप्रभाकरशङ्कापात
त्रतत्रयोगक्षेमसाधारणकारणत्वकल्पनेनग्रन्थकृतांसाधुसंगच्छते तदुक्तंमुक्तावल्याम् ननुप्रत्यवायानुत्पत्तौकथं
प्रवृत्तिरितिचेत् इत्थम् यथाहिनित्येकृतेप्रत्यवायाभावस्तिष्ठति तदभावेतदभावः। एवंप्रत्यवायाभावसत्त्वेदुःखप्रा
गभावसत्त्वं तदभावेतदभावइतियोगक्षेमसाधारणकारणतायाद्दुःखप्रागभावंप्रत्यपिसुवचत्वात् एवमेवप्रायश्चि
त्तस्यापिदुःखप्रागभावहेतुत्वमिति अस्यायमर्थः अनुत्पन्नावित्यत्रोद्देश्यत्वंसप्तम्यर्थः। कथमित्यादौनित्यकर्मणी
तिपूरणीयम् प्रत्यवायाभावः पापप्रागभावः। तदभावे सन्ध्यावन्दनादिनित्यकर्माभावे। तदभावः प्रत्यवायाभाव
स्याभावः प्रत्यवायरूपःध्वंसे तदभावे प्रत्यवायाभावस्याभावेप्रत्यवायेसति। तदभावः दुःखप्रागभावाभावोदुःखरूपः।

सू० ५२ योगोऽप्राप्तस्यप्राप्तिः। क्षेमः सिद्धस्यसंरक्षणम्। एवमेव। योगक्षेमसाधारणमेवेति अत्रनव्यास्तुप्रागभावस्यप्रतियो
गिविकल्पग्रासेनफलत्वासम्भवात्मत्त्वापात्यन्ताभावएवनित्यस्यफलंस्वरूपसम्बन्धविशेषात्मकक्षेमसाधारणा
जन्यतायाअत्यन्ताभावेसत्त्वादितिप्राहुः। अत्रप्रतियोगिविकल्पेति। अस्तुकश्चिदतिरिक्तः पदार्थः प्रागभावः तथा
पिनस्यसप्रतियोगिकत्वेप्रमाणाभावइतिसूचनार्थः नचैतन्मतेकार्यमात्रेदिक्कालस्तानेच्छादानामदृष्टप्रागभावप्रति
बन्धकाभावादन्यष्टकारणानीत्यादिप्राचांसिद्धान्तभङ्गः एवाभिनवदोषइतिवाच्यम् अस्माकंसिद्धान्तभङ्गभीत्याप्रा
सक्तेः। प्रागेवभगवदत्तपादकणादप्रभृतिमहर्षिप्रोक्तसिद्धान्तानांप्रभाकरमहादेवरघुनाथशिरोमण्यादिभिराचार्यै
र्ध्वस्तानामेवमर्दनात् उक्तञ्चरघुनाथेनन्यायखण्डनान्त्याचार्याणांयुक्तिसिद्धानां मदुक्तानांप्रयत्नतः सर्वदर्शनसिद्धा
न्तविरोधोनैवदूषणम्। आचार्यानिरुक्ताः सिद्धान्तविरोधेनापिदर्शिताः। विनाविचारंनत्याज्या विचारयतपण्डिताः। सर्वशा
स्त्रार्थतत्त्वज्ञान् नत्वानत्वाभवादृशान्। इदंयाचेमदुक्तानि विचारयतसादरमितितथाचाभावप्रत्यक्षेउपलम्भाभावस्य
नहेतुता एवमनुमितौसिसाधयिषाविरहविशिष्टसिद्ध्यभावस्याप्रामाण्यज्ञानानास्कन्दितव्यभिचारज्ञानाभावादेः दाहादि
कार्येउत्तेजकाभावविशिष्टमण्याभावादेश्चनहेतुता एवमन्यत्रापि पुरुषार्थसिद्धौचबहुतरसिद्धान्तभङ्गेनक्षतिक

रइति विदुषां परामर्शः इदमत्र सारम् उक्तरीत्या विशिष्यतत्तद्व्यक्तित्वेन कार्यकारणभावेन महात्म्येणादुःसहमभि
चारायतनत्वदोषविध्वंसेनेपि न तेन प्रवृत्त्यादिव्यवहारसिद्धिः नहि दृष्टचरं दुष्करपर्वतादिविध्वंसकेनापि वज्रात्मकेणास्थि
रवेधमहीरकवेधनम् तथाहि यादृशजलेन्धनादिसामग्रीवत्तत्क्षेत्रस्य पाकः तत्कृतिसाध्यो दृष्टः तत्सत्त्वेनापनिवर्त्त्ये
कक्ष्यनादृशजलेन्धनादिसामग्रीवत्तयानादृशत्वस्य सम्प्रतिसन्धाय प्रायशो भेत्रोपि तत्र प्रवर्त्तेते एवं यादृशाश्वादिसा
मग्रीवत्क्षेत्रस्य यागः तत्कृतिसाध्यो दृष्टः तदन्नयानादृशत्वं स्वस्य प्रतिसन्धाय भेत्रोपि तत्र प्रवर्त्तेते एवं यादृशशमदमा
दिसाधनवतो मोक्षकामिसिंतत्क्षेत्रस्य शान्तिर्वता याद्भवात्तदीयमोक्षप्रदापकाचताद्दृशत्वं स्वस्य प्रतिसन्धाय स्वमपि
तत्र प्रवर्त्तेते इदं च सामान्यप्रत्यासत्त्या सामान्यकार्यकारणभावाङ्गीकारे हि सम्भवति। यद्विशेषयोरितिन्यायोप्यत्र मूल
कएवानहीदं विशिष्यकार्यकारणभावेपि सम्भवति। परसामग्र्याः परस्यैव कार्यजनकत्वेन स्वस्य स्वसामग्र्याः स्वस्यैव
कार्य्यजनकत्वेन परस्येत्यनुसन्धानवतः कंसोऽगृहीतव्याप्तिकायूर्वेतत्साधनमक्ति दर्शनेपि किमनया मदिष्टं साध्यतेऽनि
ष्टं वेति सन्देहात्प्रवृत्त्यनुपपत्तेः। नहि प्रवृत्त्यनुपपत्तिरकिंचित्करी यतो मोक्षसाधने शमदमादौ मुमुक्षूणां प्रवर्त्तनाय हि सर्वे
षांमहर्षीणां तत्तच्छास्त्रेषु प्रवृत्तिः। नहि साकांक्षत्वसङ्गमानवन्निरर्थकेति केनापि वक्तुमर्हते। अन्यथा मुखप्रयोजना

अ० भावेविशिष्यकार्यकारणभावसम्पालनमपितीरणशयाइंलीसम्पालनवन्निरर्थकनामियात् तथाचदृढतरमभिचारादिनि
५४ रसनायविशिष्यकार्य्यकारणभावसञ्जेपिमुख्यफलानुत्पत्तानदर्थसामान्यकार्य्यकारणभावोप्यावश्यकअतःसिद्धान्तभङ्ग
कालङ्कोपिनात्रेतिमत्सरंविहायविद्वद्भिरुह्नीयमिति॰ तत्त्वार्थानामनन्तत्वात्॰ स्वल्पत्वात्तविदोमम॰ मयानोक्तंप्रमेयंपद्वाद्यन्त
न्तुधीवरैः।१। नानाग्रन्थान्समालोच्य॰ विभाव्यचपुनःपुनःमयात्रलिखितंयद्यत्॰ तेननुष्यन्तुतार्किकाः।२। न्यायाम्भोधिंसमु
न्मथ्य॰ गुरोःकारुण्यनोमया॰ भिक्षुणोद्धवसिंहेन॰ ग्रन्थः कांश्यांप्रधाय्ययमा।३। यदत्रस्खलितंकिञ्चित्॰ प्रमादेनभ्रमेण
वा॰ मान्यामयिदयावन्तः सन्तःसंशोधयन्तुतत्।४। इतिश्रीमन्निर्मलसम्प्रदायान्तमहापुरुषश्रीमद्गुलाबसिंहशिष्येणोद्धव
सिंहेनविरचितोऽभावरहस्याख्योग्रन्थःसमाप्तः

| | | |
|---|---|---|
| पत्रांक। पंक्त्यंक। मूलपृष्ठेविद् | ३।२ पदार्थविभाजकधर्मकथनं॰ विभजे | ३।२ कणादसूत्रार्थप्रजानमतं॰ येन्निति |
| १। मंगलादिश्लोक | २।७ तत्रदोषपरिहारकंमिश्रमतकं॰ ति | ३।९ कणादाद्युक्ताभावत्वं॰ खं॰ नसम्यगिति |
| १।६ ग्रंथारंभेनिमित्तकथनमथेति | २।२ मानमनोहरकृदभावत्वं॰ तत्खंडनंच | ३।४ मुक्तावल्युक्ताभावलक्षणखं॰ तन्नेति |
| १।९ उदयनमतेनाभावलक्षणंतत्खं<br>डनंच॰ तथाहीत्यादिना | २।७ कणाद्यभिमताभावत्वं॰ वा॰ यन्निति | ३।११ नानामतेनपर्योन्निसहूलक॰ अथेति |

४।६ भावभिन्नत्ववादिमतमाह। पतितेति
४।११ सत्ताभाववत्त्वंतदित्याह। नत्वाइति
५।६ खंडवाक्यार्थबोधानंतरंमहावाक्यार्थबो
५।४ तद्विपरीतमाचीनमतमाह। (धमाह। सर्वत्रेति
५।११ सापेक्षत्वमतोक्तिविषयत्ववा (प्राचीनेति
६।१ निर्विकल्पकत्वज्ञवि (दिमतमाह। मन्त्रिति
षयत्वमभावत्वंम। परेत्विति
६।८ वादिविनोदकारमतेनतदाह। वादीति।
६।१ लक्षणाश्चवरोधिकारीक। तथाचेत्यादि
६।५ अभावानां१० लक्षणाक। आत्मेत्यादि ना। ना।
६।८ दीधितिकारोक्ताभावलक्षणमाह।
६।९ कौस्तुभोक्तमतलक्षणमाह। महादेवेति।

८।११ लक्षणानांमयेजनमलक्षणानांहेत्वाभास
७।५ पक्षतावच्छेदकहेत्वोरैक्येदोष (लेचाह नत्विति
७।१२ तत्खंडनमाह। नेत्यादिना। (माह अथेति
८।१ संसर्गान्योन्याभावयोर्लक्षणमाह। केचिदिति
८।८ अभावमात्रस्येप्रतियोग्यारोपस्यहेतुत्वमाह।
८।१० उक्तलक्षणयोः खंडनमाह। नदस (नेत्यादिना।
९।२ खंडनापमतांतरोक्तदिलक्षण (दिति।
९।५ अत्यंताभावप्रतियोगितानसं माह अन्येत्विति। बंधावच्छिन्नेति
९।४ संसर्गान्योन्याभावयोर्निर्दुष्टल। अतिरिक्तेति
९।५ संसर्गाभावविभागः
१०।२ अत्यंताभावलक्षणमाह। नित्येति
१०।६ सामयिकाभाववादिमतमाह। प्राचइति

११।९ तदनंगीकर्तृमतमाह। लीलेति
११।१ अत्यंताभावेलाभविकत्ववादिम। मणीति
११।५ वैशिष्ट्यांतरवादिमतमाहदीधितीति
११।७ खंडनापमतांतरमाह। पक्षिति
११।१ अभावाभावानतिरिक्तवादिमिश्रम। अत्रेति
११।२ तदतिरिक्तवादिमतमाहदीधितीति
१२।१ नानातिरिक्ताभाववादिम। सोंदडेति
१३।१ नृसिंहाकाराभावव्यवस्था। जलघटेभयेति
१३।६ तन्मतखंडनंप्रतियोगिताविचारश्च। तन्नेति
१३।२ विशिष्टेवैशिष्ट्यावगाहिबोधेविशेषणताव
च्छेदकनिर्णयस्यहेतुत्वेयुक्तिश्च। किंचेति
१३।८ निर्णयत्वंविहायज्ञानत्वेनहेतुत्ववादिम। पक्षिमि

अ॰ ५५

१४।४ अभाववद्वृत्तिप्रतियोगितानवच्छेदकत्वमतत्वं· नन्वेति
१४।९ अत्र प्रतियोगिरूपविशेषणज्ञानहेतुत्वमतत्वं·
विशेषणज्ञाने कारणतास्या· चतदपीति
१४।६ घटत्वेन पटो नास्तीत्यादौ सर्वत्राभावाभाव
१५।२ मानसबोधेप्यनुपलब्ध्यानां तथा प्रयोगः (स्या·
१५।५ प्रतियोग्यवृत्तिधर्मेण प्रतियोगितावच्छेद (तथापीति
निमणिग्रंथस्य शब्दविधया प्रमाणत्व (स्वेदकद
१५।९ तस्यानुमानतयापि प्रमाणत्वं· (स्वेन्नाथ इति
नापर इति
१५।१० तस्यानुमानविधया प्रमाणत्वस्या· नामयेति
१६।४ पुनरधिकरणाभावसाधनं· इदं पुनरिहेति
१७।७ अभाववद्वृत्तिप्रतियोगिनिरूपितेर्हेतुत्वं· वस्तुत
१७।९ तस्या हेतुत्वेऽभावनिर्विकल्पकेदृष्टा (स्तीति
पत्तिक· इदंत्वेति

१७।१० प्रकारतारेणाभावनिर्विकल्पकत्वं· किंचेति
१८।४ मतद्वयेप्यपूर्वेगदार्थएकदेशकं· अत्रेति
१८।२ अधिकरणाभावानंगीकर्तृमिश्रमतत्वं·
१८।१० अधिकरणधर्मे संबंधावच्छिन्नभेद (सोपिनेति
१९।८ अत्रदीधितिकारसंमतिक (स्या· एतदिति
प्रतियोगितात्व· च एवमिति
१९।७ अभावे प्रतियोगिनः संबंधकथनं· पटोनेति
२०।१ संयोगेन पटो नास्तीत्यादौ तात्पर्यविचारः सं
२०।९ पटत्वेन पटो नास्तीति वाक्यान्न शाब्द (योगेनेति
२०।८ तत्र शाब्दस्थापना पञ्जरीशा (इत्याह· गदाधरेति
२०।११ पीतः शंखो नास्तीत्यादौ संवं (मतमाह परेत्विति
२१।६ अत्र कौस्तुभकारः केचित्तु कार (धत्व· पीत इति
मतेति·

२१।७ अत्यन्ताभावान्योन्याभावैकत्वसाधनप्रदर्शनं· ननजिति
२१।१० अन्येत्वेवं खंडनापकस्य चिन्मतमाह· यत्त्विति
२२।६ नञर्थैकाभावत्रैविध्यनिराकरणाद्विमतत्वं· तदुभ (येति
२३।१ अधिकरणस्वरूपाभाववादिमताकरमत
२३।६ ध्वंसातिरिक्तवादिमतानुकारमतत्वं· (नि· अत्रेति
२३।६ प्रागभावखंडनारंभः एवमित्यादि· (तुच्छमिति
२४।८ प्रागभावातिरिक्तवादिमतानुकारमतत्वं· तत्रेति
२४।७ स्वरूपत्वानुपपत्त्या तत्साधकमतत्वं· तदसदिति
२४।८ मतद्वये विशेषमाह· अत्रेति
२५।२ विशेषे दृष्टानुपपत्तिप्रयात तत्साधकमतत्वं· तदपीति
२५।५ प्रागभावसाधकचित्रसूत्रापतिखंडनं· नचेति
२५।४ उत्पन्नस्य पुनरुत्पत्तिभिया तत्सिद्धिमतत्वं· तद
सदिति

